8. राष्ट्रे यस्य तरोः परागपटलस्तत्कर्षणात्क्षेत्रिणां
देहं चिह्नयति प्रसूननिवहात्तस्मिन्निवृत्ते धवे।
वेश्यासंश्रयतः प्रिया पतिकुलश्रीवर्धिका मानिता
तत्कृत्यं क्षमते प्रशान्तवचना कान्तस्तु लज्जापरः ॥10॥

सखी आत्मगतम् वक्ति। 'यस्य (धवस्य) राष्ट्रे तरोः शाखायाः कर्षणात् तस्य परागपटलः कर्षकाणां देहं चिह्नयति तस्मिन् वेश्यासंश्रयतः गृहं निवृत्ते सति तस्य प्रिया पतिकुलश्रीवर्धिका सर्वैर्मानिता प्रशान्तवाक् तस्य दुर्वृत्तं क्षमते, न किंचिदधिक्षेपतया वक्ति। परं तु तन्मुखाद्गर्हणं प्रतीक्षमाणः पतिर्लज्जापर एव स्वगृहे वसति' इति। यथा क्षेत्रिणः तरोः परागेण चिह्निताः गृहमागच्छन्ति तथैव धवोऽपि वाराङ्गना—संभोगचिह्नित एव गृहं निवर्तते इति सूचितम्। नदीतीरविभागे। शार्दूलविक्रीडितं वृत्तम्।

**8. The friend of the girl to herself :**

What a woman! And what a love
That has endured through those empty days
And the lonely watches of the night,
The love that has so overwhelmed
All resentment at the crime of crimes-
The crime against itself! She brought
Prosperity to her husband's house
By the mere act of stepping in
As his bride. She was dear to him,
She was the light of his life for a while :
And what betrayal : He strayed away
He wore out his youth in the harlots' houses
While she pined away in silent suffering.
But lightning and thunder : When he stands without
At the door of her house in a plaintive pose
When the least she could do is to bang the door
In his faithless face, when his countless sins
Just cry out for retribution,
She welcomes him with her sweetest smile
On her glowing face, with words to match.

With not a trace of all that agony
The heartache of those lonely days.
But what a change in the foot-loose husband!
Circumscribed by a sense of shame
That pervades all his inner being
He moves about in his ancestral house
Embarrassment write large on his features!

(Kuruntokai 10)

9. वल्मीकवल्लघुजलाशयचिह्नितेऽध्वन्युत्तप्तलोहनिभसोष्णशिलातलस्थाः।
उन्नामितोग्रतरचापभृतश्च चोराः नाराचमध्वगवधाय निशातयन्ति ॥

एतावद्घोरमध्वानं गच्छतीति दयां विना।
किंवदन्तीपराः पौराः द्विषन्तीमं जनं च तम् ॥12॥

नायिका सखीं वक्ति। 'धवः महाभययुतमध्वानं गच्छतीति नसानुतापमिदं पुरम्। परं तु मां च तं च दूषयति, किंवदन्तीरपि प्रसारयति। कीदृशोऽध्वा तस्य? सूर्येण नितान्तं तप्तत्वाल्लोहवत्सोष्मशिलायुतः। तत्र वल्मीकवल्लघुजलाशयाः चिह्नतया वर्तन्ते। उग्रं चापं करे धृत्वा चोराः बाणं पथिकवधाय निशितं कुर्वन्ति। एवं भयङ्करी मरुस्थली'ति। मरुस्थलीविभागे। प्रथमपद्यस्य वसन्ततिलका वृत्तम्। इतरस्यानुष्टुप्।

**9. The girl to the friend :**

The lord of my heart has chosen to go
Traversing the barren deserts
Where waterholes are tiny, looking like
Ant hills - with pathways forking out,
Where brigands standing on rocks heated
To the level of stones in furnaces
Sharpen their arrows with which they slaughter
Hapless wayfarers. But the people of this village
Far from feeling pity for him
Have chosen to spread calumny,
To heap abuses on him and on me!

(Kuruntokai 12)

10. सुस्नातकुञ्जर इव प्रसभं प्रवृष्ट्या प्रक्षालिता स्फुरति यस्य शिलाद्रिपादे।
उद्भेदवत्प्रचुरभूमिपतिर्व्यदान्मे वैवर्ण्यमुत्पलनिभस्य दृशाद्वयस्य ॥13॥

कामिनीवचनं सखीं प्रति। यस्य प्रेमिण अद्रिपादे शिला प्रवृष्ट्या सुस्नातकुञ्जर इव प्रसभं प्रक्षालिता स्फुरति, सः उद्भेदवद् भूमेः तरुलतागुल्मादिभिः समृद्धस्य राष्ट्रस्य, पतिः वियोगकारणात् मे दृशाद्वयस्य नेत्रयुगलस्य वैवर्ण्यं व्यदात् ददौ। तस्य प्रवासात् अनादराच्च दुःखिनी संभूताहमि'ति विलपति। पर्वतविभागे। वसन्ततिलका वृत्तम्।

**10. The girl to the friend :**

The chieftain of the hills
Where the big round rock
Washed clean by the rains
Stands out against
The green verbiage
Gave me this love-disease.
My eyes that were black
Like the bluebell flower
Have now been turned
White through pallor

(Kuruntokai 13)

11. चोरा रवं बाणानिशातनार्थम् अग्रे नखानां लुठनाच्छराणाम्।
यं कुर्वते तं सरटः प्रियाया आह्वानमिच्छन्प्रकरोति मार्गे ॥

स्वनं तमाकर्ण्य कृतं प्रियायाः कृते सरागं तव वल्लभोऽपि।
किं न स्मरे त्वां चिरविप्रयुक्तां मध्येपथं वित्तचयाभिलाषी ॥16॥

सखी नायिकां वक्ति। 'मरुस्थलीमार्गेण नगरान्तरं गतः वल्लभः त्वां विस्मरेदिति बिभेषि। प्रियसखि, एतद्भयं त्यज। मरौ सरटः स्वप्रियाया आह्वानमिच्छन् कंचिद्रवं करोति। तं श्रुत्वा ते धवः तव दिदृक्षया शीघ्रमायाति। स रवः सरटेन कृतः मरुस्थलयां चौरैः नखाग्रे लुठनात् शरान् शातयितुं कृतेन शब्देन तुल्यः। एते चोराः निर्दयाः। एतेषां क्रौर्यं ते वल्लभं गृहाय चोदयति। मा शुच' इति। मरुस्थलीविभागे। प्रथमं पद्यमिन्द्रवज्रा, द्वितीयं तूपजातिः।

**11. The friend to the girl :**

You think, dear, the lord of your heart,
May go forgetting you in his quest
For a hoard of wealth. It isn't likely !
For the desert lizard can be heard
Sending his call to his loving mate
By making a sound that is rather like
That produced by the brigands of the desert
Sharpening their arrows on the nails of their fingers.
The call of the lizard to his mate
Will send him speeding home to you !

(Kuruntokai 16)

12. तालच्छदैः कल्पितवाजिसादी धृत्वार्कमालां नगरस्य वीथ्याम्।
पौरेषु हेलामुखरेषु गच्छेदन्यानि कुर्यादपि रूढकामः ॥17॥

कामी सखीं वक्ति। 'कामिन्याः संमतिम् अलभमानाः कामिनः प्रायशः तालच्छदकल्पिततुरङ्गमारुह्य अर्कमालां धृत्वा नगरवीथ्यां संचरन्ति। तान् दृष्ट्वा पौराः हेलावाक्यानि वदेयुः। इमानि च अन्यानि च कर्माणि कुर्वन्ति कामिनः कामिनीहृदये घृणामुत्पादयितुम् जनतुम्' इति। इदं तालाश्वारोहणमिति प्रख्यातं द्राविड्याम्। पर्वतविभागे। इन्द्रवज्रा वृत्तम्।

**12. The boy to the friend of the girl :**

Those in whom the seed
Of love has taken root
Might ride a horse of leaves,
Wearing round their heads
Garlands of the bloom
Of even the arka plant,
Might welcome being riled
By crowds in the public streets,
Might do all these things
And other things besides–
Those men with hearts assailed
By the deadly darts of love!

(Kuruntokai 17)

13. आमूलतः फलति यस्य नगे प्रमुख्य वर्षाभिपुष्टपनसः शृणु स त्वमेतद्।
वृन्तं सखे गतबलं पनसं गुरु स्यात् प्राणोऽणुरात्तमहिमा प्रणयस्तथास्याः ॥18॥

सखीवचनमेतद्वल्लभस्य पुरतः। तस्य नगे बहवः पनसवृक्षाः सन्ति। एतेषां फलानि न केवलं शाखासु परंतु मूलेष्वपि दृश्यन्ते। पनसफलमेवोदाहृत्य कन्यायाः स्थितिं तस्मै वर्णयति सखी। फलस्य वृन्तमल्पसत्त्वं, फलं तूदात्तपुष्टि भारवत् भवति। स्वस्य गुरुत्वात् वृन्तस्याल्पसत्त्वत्वाच्च फलं भूमौ निपतेत् बहुधा भिन्नं च स्यात्, यदि तत् काले नावचितम्। तथैव कन्येयमपि यदि काले नोपयन्त्रा भुक्ता तर्हि विशीर्येत। अस्मिन् पद्ये कामस्यातिपुष्टस्थितिः प्रणानां दौर्बल्यं च निपुणं वर्णिति। पर्वतविभागे। वसन्ततिलका वृत्तम्।

**13. The friend of the girl speaks :**

I grant you love her, O chief of the hills!
But you don't see how she wastes away
With all this delay in your coming together
In holy wedlock : her love has grown
Almost too great for her slender frame
To contain it. Havn't you seen
Gigantic jaċk-fruits in your native hill
Hanging by their slender stalks?
A touch may fell them, the littlest breeze
A careless brush by a passing beast
May send them crashing down to the ground.
If you fail to secure her
Through a proper wedding, mountain chieftain,
The fruit of her love growing great
May well snap the slender stalk
Of her fragile life, crashing down,
A useless mass that will rot away
Unsavoured, unfulfilled.

(Kuruntokai 18)

14. मनो मे रिक्तानां गण इव वदान्यस्य निधनात्
ततानामास्फाले प्रथितचतुराणां हतरुचि।
इयं जाती रात्रिस्मितकुसुमसंस्कारचिकुरा
कथं मे संबद्धा परिमलवपुर्ब्रूहि हृदय ॥19॥

प्रणयकलहे संभूते नायक आत्मगतं वक्ति। ततानां वीणादिवाद्यानामास्फालने वादने प्रथितकौशलानां रिक्तगायकानां गणः यथा वदान्यस्य मरणात् विगतशोभं भवति तथैवावयोः कलहेः संभूते मे मनः विगतद्युति भवति। गृहपक्षरुहजातीलतायां रात्रौ स्मितैः प्रफुल्लैः कुसुमैरलङ्कृतचिकुरा बालेयं परिमलवपुः कथं मे संबद्धा? हृदय, ब्रूहि तदि'ति। तृतीयचतुर्थपादयोः कृतवर्णनात् स अन्तःकरणे सानुराग एवेत्यूह्यते। परं तु कलहजाततात्कालिककोपादसौ 'केन प्रकारेणेयं मया संबद्धे'ति पृच्छति। नदीतीरविभागे। शिखरिणी वृत्तम्।

**14. The boy to himself :**

Lament, O heart, grown lustreless
Like the heads of bards who strum the lute,
Heads bereft of golden bloom
On the death of Evvy, patron of arts?
What is that girl to you in truth?
The girl who wears coiffeured braids
Smelling sweet with the brightest blossom
Of the mullai creeper that blooms at night
Twining round the tree that grows
On a side of the house. How does the girl
Matter to you, O heart of mine?

(Kuruntokai 19)

15. हित्वा कृपां प्रेम च वल्लभां च वित्तार्थगामी यदि बुद्धिमान्स्यात्।
यः प्राज्ञमानी स भवेत्तथैव भवेयमालीह विमूढचित्ता ॥20॥

नायिका 'तव वल्लभः प्रयाणोन्मुख' इति वदन्तीं सखीमेवं वक्ति। 'मां नितरां दयितामत्र हित्वा कृपां न दर्शयन् प्रेमबन्धं चानादृत्य यः गन्तुमनाः स एव दृढचित्तः प्राज्ञश्च भवेत्। वियोगमसहमानाहमत्रैव स्थिता विमूढचित्तेति गार्ह्यतामुपेयाम्' इति दुःखभूयिष्ठा धवस्य निर्दयत्वं दूषयन्ती वदति। मरुस्थलीविभागे। इन्द्रवज्रा वृत्तम्।

**15. The girl to her friend :**

If only those that can leave behind
Their devoted wives and the bond of love
And compassion and consideration
Can be termed stout of heart
Let him earn the vaulted title!
And let me get the sobriquet
Of the scatter-brain, I shall not mind!

(Kuruntokai 20)

16. कन्याः स्वकुन्तलधृतच्छदनप्रसूनभृङ्गा ज्वलत्कनकभूष्युता इवालि।
वृक्षा प्रफुल्लकुसुमाः प्रथयन्ति वर्षं नैतेषु विश्वसिमि नानृतवाक् हृदीशः ॥21॥

वर्षाकालस्यारम्भे कथमिमां सान्त्वयामि धवो नायातः यथा प्रतिज्ञातमिति साकूतां सखीं नायिका वक्ति। 'वृक्षाः पुष्पिताः, संस्कारवत्कुंतलाः स्वर्णभूषणपरिष्कृताः कन्या इव लक्ष्यन्ते। पुष्पितत्वात् सखः इयं वर्षर्तुरिति घोषयन्तीव। परं तु तेषु न विश्वसिमि। मे धवः सत्यवादी'ति। यद्ययं वर्षाकालस्तत्त्वतस्तर्हि स आयातः स्यादितः पूर्वमेवेति तस्याः प्रतीतिः। गोप्रचारविभागे। वसन्ततिलका वृत्तम्।

**16. The girl to the friend :**

The woods are in bloom with the konrai trees
Putting forth golden flowers.
Even like the coiffeured hair of girls
Bedecked with ornaments
Interspersed with blossoms opened
By the tread of swarms of bees.
The trees all appear to proclaim to the world
The coming of the rainy season,
But me? I can not believe their words
For he isn't a liar, for sure!

(The boy did not return with the onset of the rainy season but the girl with an unshakeable faith in his words refuses to accept what her senses tell her, that the rains have in fact started)

(Kuruntokai 21)

17. घूर्णद्दक्षिणतः कदम्बकुसुमं स्वङ्गे प्रसूते तरुः
तद्वद्गन्धयुतं ललाटमिह ते त्यक्तवा गृहे वल्लभः।
कान्तामश्रुमुखीं वसन्तसमये ह्येकाकिनीं दुःखिनीं
को वा गन्तुमितो व्यवस्यति समं कान्तस्त्वया यास्यति ॥22॥

प्रवासं गच्छेत्पतिरिति सूचनान्नितरां दुःखितां नायिकां सखी वक्ति। 'कदम्ब–तरुः स्वङ्गे सुपुष्टशाखासु दक्षिणतः घूर्णत् किंचिद्वलयितं पुष्पं प्रसूते। तत्कुसुमवत्सुरभि तव ललाटमिह विहाय वसन्तसमये दुःखिनीमेकाकिनीं कान्तां गृहे त्यक्त्वा को वा प्रवासं गच्छेत? यदि प्रवासगमनमावश्यकं भवति तर्हि स त्वामपि नेष्यति, एकाकी नैव गमिष्यती'ति। मरुस्थलीविभागे। शार्दूलविक्रीडितं वृत्तम्।

**17. The friend to the girl who is anguished at the signs that the husband intends to journey to distant lands :**

On the slope of the hill, the kadamba tree
Brings forth clusters of flowers with a whorl.
Your forehead, dear, gives off the same
Sweet perfume as the kadamba bloom.
Which young man will leave behind
His loving wife in the height of Spring
Condemned to a life of lonely tears?
If he goes, you go with him!

(Kuruntokai 22)

18. निम्बोत्पन्नप्रथितकुसुमाच्छ्रीर्नवा प्रापणीया
कान्ते चेत्थं चिरविरहिते किं व्यतीयान्निरर्थम्।
संनिष्पिष्टं कटकनिवहैः पक्वमौदुम्बरं यत्
तद्वत्क्लिष्टा नगरमहिलाकिंवदन्त्या व्यथेऽहम् ॥24॥

नायिकोक्तिः। 'निम्बतरुः कुसुमितोऽधुना। तस्मात्काचित् श्रीर्धनसंपत्तिर्लभ्या–स्माभिः। परं तु कान्ते चेत्थं चिरविरहिते सति सा श्रीर्निरर्थं व्यतीयात्किम्?' तेन विना किं वा प्रयोजनं वित्तस्येति भावः। 'तस्य वियोगात् नितरां दुःखिताहम्। शोकार्तां मां इतोप्यधिकं क्लेशयति नगरस्त्रीणां किंवदन्ती। तयाहं कटकनिवहेन निष्पिष्टं पक्वमौदुम्बरं फलमिव संभूतौति। निम्बतरुर्वसन्तकाल एव कुसुमितो भवति। कान्तस्तु प्रयाणसमये, 'वर्षाकालप्रारम्भ एवागमिष्यामी'ति प्रतिश्रुत्य गतः। प्रत्यागमनकालावधिं व्यतीतं दृष्ट्वैव नायिका व्यथते। गोप्रचारविभागे। मन्दाक्रान्ता वृत्तम्।

**18. The girl to herself :**

The neem tree is in full bloom now
And its flowers fetch a price in the market
But what is the use of such wealth coming,
With the lord of my heart away from me?
He has been gone for so long a time
And the wagging tongues of village women
Have lashed me in my grief to a pulp.
Even like the fruit of the fig tree growing
On the bank of river crushed by a swarm
Of eager crabs to a shapeless mass.

(Kuruntokai 24)

19. न कश्चिदासीदनृतोक्तिना विना निषेधति प्रेयसि का गतिर्मम।
समागमाहे स्रवदम्बुसंस्थितः बकः प्रसन्नोऽर्थितमत्स्यसंहतिः ॥25॥

नायिका सखीं वक्ति। 'आवयोः समागमदिने तत्र न कश्चित्साक्षी (प्रसन्न) आसीत् अनेनानृतोक्तिना। असत्यवाचा धवेन विना। यदि सः निषेधति, यदि 'तामहं न जाने' इति वदति तर्हि साक्षिषु विनाभूतेषु मे का गतिः स्यात्? स्थित्यां किंचित् चिन्तितायां, कोऽपि साक्षी तत्रासीत्। स्रोतसि तिष्ठन् मत्स्यागमनं प्रतीक्षमाणः कोऽपि बकः सर्वमपश्यदेवे'ति। साक्षी नासीदित्युक्तेः श्लाघ्यतरं रसपोषणे कोऽपि बक आसीदिति वाक्यम्। पर्वतविभागे। वंशस्थं वृत्तम्।

**19. The girl speaks :**

It's quite a time
Since he stopped coming.
What will I do, dear,
If he breaks the troth?
What will I do if he denies all,
All that happened
In the river bank
Deep in the heart
Of the leafy bower?
For there was no witness
To testify.
Excepting him
And poor me
There was none
Who could bear testimony...
But in truth,
There was one,
A lone witness.
Standing still on a spindly leg,
Await for
The casual fish
Come swimming by,
Was a lone heron
On the water's edge.

(Kuruntokai 25)

20. वृक्षस्य तुङ्गविटपेषु सुपुष्पितेषु सम्यङ्निषण्णशिखिनो वनितोपमेयाः।
तस्याग्र्यमद्य यदवोचदनर्हमस्याः सोपासकी न खलु विश्वसनीयमेतत् ॥

आम्रं फलं रुचिरमद्रितटेषु डिम्भः जग्ध्वा कपेर्विहरति प्रततं हि यस्य।
सोऽपि प्रमुख्यमवगच्छति दुर्विनीतम् प्रत्यादिशेन्न नयनद्वयदृष्टमेषः ॥26॥

नायिकायाः देहमनः प्रवृत्तीर्भिन्नभूताः दृष्ट्वा मातरौ दैवोपासकीमाहूयापृच्छताम्। सा व्याधेः कारणं देवस्य कोप एवेत्यवदत्। शैलमुख्यं तस्याः प्रीतेरर्हं नाशंसत्। तद्विज्ञाय सखी सत्यतः प्रेमवृत्तान्तं मातृभ्यां निवेदयत्येवम्। 'तस्य मुख्यस्याद्रितटेषु वृक्षस्य तुङ्गविटपेषु सुपुष्पितेषु संयङ्निषण्णाः मयूराः वनितोपमेयाः दृश्यन्ते। तं मुख्यमेवास्याः रागस्य कारणमविज्ञाय सा भवद्भ्यामाहूतोपासकी कारणान्तरमवोचत्। तस्याः वचसि प्रतीतिर्मा भूत्। तस्य पर्वते, यस्य कपेः डिम्भः रुचिरमाम्रफलं खादित्वा प्रततं विहरति स पशुरपि मुख्यस्य दुर्विनीततां (तस्याः सख्यं) अवगच्छति, जानाति। यत् नयनद्वयेन साक्षात् दृष्टं तन्न प्रत्यादिशेत् स कपिरि'ति। पर्वतविभागे। वसन्ततिलका वृत्तम्।

**20. The friend of the girl addressing the natal and the foster mother :**

It's possble that the priestess has
Pronounced the chieftain of the wooded hills
Unfit to wed my friend, your daughter–
The chieftain in whose highland woods
Peacocks sitting on vengai branches
Look like the girls who pluck the blooms
They, in truth, have met, my mothers,
He, the chieftain and your darling daughter
Under the veil of secrecy :
But there, indced, was a living witness
Who saw them come in love together,
A he-monkey, the one that has sired
Young ones, prancing over the mountain slopcs
Plundering the fruit of the mango trees–
He will, surely, testify

To the ruthless chieftain and this girl
Coming together in ardent love.
He will not deny what he saw
With his own eyes—he never will !

(Here, apart from divulging the truth of the love affair before the critical-minded natal and foster mothers, the words of the friend manifest her annoyance at the lack of initiative of the young chieftain who should have taken steps to apprise the girl's parents and avoided all this fuss and embarrassment.)

(Kuruntokai 26)

21. न वत्सपीतं न च पात्रपाति पयो यथा सिक्तमधो निरर्थम्।
रङ्गस्तथा पाण्डुरताशितो मे सार्थो न मे नैव च वल्लभस्य ॥27॥

नायिका सखीं वक्ति। 'यथाधः सिक्तं पयः न वत्सोपयोगाय नास्माकमपि प्रयोज्यं तस्मात्सर्वथा निरर्थकं भवति, तद्वदेव मम सुन्दरो रङ्गः वियोगोत्थपाण्डरतया खादितः न मे मनसस्तुष्ट्यै न च वल्लभस्यापि सार्थः, व्यर्थो भवति' इति। मरुस्थली-विभागे। उपजातिः वृत्तम्।

**21. The girl to her firend :**

The milk from a cow that spills to the earth
Fails to fulfil the need of the calf
Nor does it serve the people who rear
The cow, by flowing into the can
My complexion fair has been eaten up
By the spreading pallor, it's useless now
Either to me or to him I love.

(Kuruntokai 27)

22. शर्वर्यां मम तल्पमेत्य दयिते गाढं परिष्वज्य माम्
मिथ्यावादपटौ तु सत्यमिव मे स्वप्ने भ्रमं कुर्वति।
उत्थायागत इत्यवैमि चपला तल्पं परामृश्यत-
मेकाकिन्यलिपादघातनिहतोत्फुल्लप्रसूनं यथा ॥30॥

कन्या सखीं वक्ति। स्वप्ने कामिनं चिरप्रोषितं दृष्ट्वा मिथ्यावादिनः सामर्थ्यात् सत्यमिति विश्वस्य कन्या तल्पादुत्थाय तल्पं परामृशन्ती स्वप्नमिति ज्ञात्वा नितरां दुःखिता एकाकिनी भृङ्गपादाघातैः प्रमथितं पुष्पमिव परं दैन्यं गता। मरुस्थली विभागे। शार्दूलविक्रीडितं वृत्तम्।

**22. The girl to the friend who rebuked her on her inablility to keep her grief under control :**

Listen to this, dearest! He came last night—
The king of liars — and embraced me
Body to body, it was a dream
But one that looked so true, so real
I woke up and kept on stroking the bed!
I am crushed to pulp by last night's dream
Even like a blue-bell trodden under
By swarms of bees gathering honey,
My condition, dear, is worthy of pity!

(Kuruntokai 30)

23. प्रभातवेलेयमयं प्रदोषो मनोव्यथापूर्ण इयं निशा च।
स्वपन्ति यस्यां पुरवासिनश्चेत्येतेषु भेदः समयेषु यस्मिन् ॥
व्यक्तो न कामोऽयमहं तुरङ्गे तालच्छदीये नगरे चरेयम्।
आक्षेपरूक्षेषु जनेषु सोऽपि निन्दास्पदः प्राणनमप्यवद्यम् ॥32॥

प्रियया निराकृतो नायको वक्ति। 'प्रभातसायंकालरात्र्यादिकालभेदाः यस्मिन् व्यक्ततया दृश्यन्ते स न कामः स्यात्। कामिनः सर्वे एते कालाः एकतया दृश्यन्ते। प्रिययानादृतोऽहं यदि तालच्छेदैर्निर्मिते तुरङ्गे नगरवीथीषु चरेयं मां पश्यन्तः पौराः साक्षेपवचनं मां निन्दन्ति। तदवद्यमेव। मत्स्थित्यां तर्कितायां जीवनमपि तथैवे'ति। प्रियया निराकृताः प्रेमिणः जनानुतापसंपादनार्थमेवं तालच्छदतुरङ्गमधिरूढाः नगरवीथीषु चरन्ति। आत्मनः दुस्थितेर्गर्हणपरः नायकः प्रायश एवं प्रकारेण वक्ति संघसाहित्ये। परं त्वन्ते प्रिया तमङ्गीकरोति, तौ विवाहेन बद्धौ भवतः। पर्वतविभागे। प्रथमपद्यस्योपजातिर्द्वितीयस्येन्द्रवज्रा वृत्तम्।

**23. The boy to himself in a depressed mood when his ladylove has not encouraged his advances :**

If one can tell the morning from
The noon and the evening and the hours of the night
When the whole world falls fast asleep,
Then one is not in love, for certain.
And if to mount a palm-leaf horse and move
In the streets of the city inviting
Popular ridicule is a shameful thing,
To keep alive is shameful, too,
If she and I are separated.

(Kuruntokai 32)

24. अयं वटुर्नातिवयाः प्रवक्ता ग्रामे स्वकीये कथमेव वक्ति।
भैक्ष्यं चरन्कार्श्यमुपागतोऽयं समीप्सति प्राज्यमिहाग्रजन्मा ॥33॥

अनुमतिं याचमानेन धवेन प्रहितस्य ब्राह्मणदूतस्य पुरतः नायिका सखीं वक्ति। 'अयं वटुर्युवैव, नातिवयाः। परं तु केन वा नैपुण्येनास्मत्पुरतः प्रवक्ति! पुरान्तरेऽपरिचितजनेष्वस्य वाक्कौशलमेतावद्यदि, स्वग्रामसभायां कथं वा वक्ति? भैक्ष्यव्रतानुसरणादस्य वपुः कार्श्यं भजते। सुभोज्यं समीप्सति तद्ददद्यावास्मै।' इति। पण्यस्त्रीभवनात्स्वगृहं निवर्तितुमिच्छता धवेन प्रहितः विप्रदूतः तावता वाक्पटुत्वेनाभाषत यावता पूर्वं क्रुद्धापि नायिकानुनीतानुमतिं दत्तवा दूतमप्यादयति स्वगृहे। नदीतीरविभागे। उपजातिः वृत्तम्।

**24. The girl to the friend in the presence of the brahmin messenger sent by her erring husband :**

This boy is young but what a speaker!
If he speaks like this before us, strangers
How will he harangue his village gathering!
He looks weak eating the food
He can get by seeking alms
As prescribed for the people of his caste.
He sure must like a well-cooked feast!

(Kuruntokai 33)

25. निर्लज्जे ननु लोचने मम यतस्तस्मिन्प्रयाणोन्मुखे
संमत्याद्य हिमानिलः शिशिरितः शेषाम्बुभिः प्रावृषः।
गर्भासन्नहरिद्भुजङ्गमवधूतुल्येक्षुजालं स्फुटन्
अत्यन्तं तु यदा हिनस्ति सखि मां बाष्पांस्तदा मुञ्चतः ॥35॥

नायिका सखीं वक्ति। 'वल्लभे प्रयाणोन्मुखे सति मे नेत्रे न व्यलपताम्। परं तु स न निवर्तते काले। वर्षाकालोऽवसितः। अस्मिन् शिशिरे शीतानिलेन नितरां व्यथितास्मि। किं करोति शीतानिलः? आसन्नसत्त्वायाः हरिद्वर्णभुजङ्गमायाः गर्भवन्मुकुलितं इक्षुजालं विकचीकरोति। विकचं पुष्पं शृङ्गारसूचकम्। एवं हिंसितायाः मम लोचने अस्मिन्समये बाष्पान् मुञ्चतः विलपत इति कारणात्ते निर्लज्जे।' नदीतीरविभागे। शार्दूलविक्रीडितं वृत्तम्।

**25. The girl to the friend :**

My eyes in truth are shameless!
For, when the chief was starting
On his planned journey
They gave him silent leave.
But now with the winter's wind
Bitter, cold and damp
That carries drops of water,
That has broken open the bud
Of the sugarcane, well-nourished
That looks like the swollen womb
Of a green snake, big with child,
My eyes are shedding tears,
Copious, shameless tears!

(Kuruntokai 35)

26. गजोऽपनेतुं स्वकरेणुकायाः क्षुधां त्वचं निर्हरति द्रुमस्य।
तिर्यञ्च एवं पथि कामवन्तः दयेत ते कामितया स कान्तः ॥37॥

सखी कामिनीं वक्ति। 'द्रव्यार्थं ते कान्तः त्वां विहाय मरुस्थलीमार्गेण देशान्तरं गन्तुं प्रस्थित इति त्वं शोकभूयिष्ठासि। मार्गे मरुस्थल्यां विजलत्वात् आहारस्य दुर्लभत्वाच्च गजः करेणुका च क्षुधया महत्कष्टमनुभवतः। स्वकरेणुकायाः क्षुधामपनेतुं गजः 'या' इत्याख्यतरोः खादनयोग्यां त्वचं निर्हरति तस्यै दातुम्। एवं तिर्यक्षु विद्यमानं कामं दृष्ट्वा ते कान्तः त्वां स्मृत्वा ते दयेत, शीघ्रमेव आगमयिष्यति मा शुच' इति। मरुस्थलीविभागे। उपजातिवृत्तम्।

**26. The friend to the girl :**

Do not despair for he loves you well
And he shall be back to make you happy,
He shall return from the desert walks
Where the elephant peels the juicy bark
Of the yām tree that he may feed
His mate going hungry : the animal lover
Showing solicitude for his mate in torment
Shall furnish him with the fleetest wings
To hurry home to dry your tears!

(Kuruntokai 37)

27. पाषाणे यद्विपिनशिखिनीसूतमण्डं लुठन् तत्
सूर्यालोके विहरति शिशुर्मर्कटस्याद्रिपादे।
राष्ट्रे यस्य प्रियसखि धवस्यानुरागः प्रसन्नः
नास्या भूयाद्धृदयदहनो या प्रवासं सहेत ॥३८॥

कामिनी सखीं वक्ति। 'तस्याद्रिपादे विपिनशिखिनीमुक्तमण्डं मर्कटशिशुः सूर्यालोके पाषाणेऽश्मनि लुठन्विहरति। तेन सह (दयितेन) सख्यं तासामेव हृदयदहनो न भूयाद्याः तस्य प्रवासं दुःखेन विना सहन्ते, न तु मम। तस्य वल्लभस्य प्रवासः मम हृदयं दहति, मया तं वियोगं सोढुं असाध्यमि'ति। पर्वतविभागे। मन्दाक्रान्ता वृत्तम्।

**27. The girl to the friend :**

In his hills the monkey pup
Rolls on the rocks the peahen's egg
Playfully, when the sun is shining.
The friendship one has contracted
With this lord of the hills can be nursed
With patience, without gnawing grief
Only if one has learnt the art
Of living through spells when he keeps away,
Without a cascade of welling tears.

(Kuruntokai 38)

28. नेच्छन्ममोरसि सुखं शयनं विहाय यत्र प्रियश्चरति तिग्मसमीरणेन।
तत्र प्रचालितगुलीपरिशुष्कबीजं शब्दायते विजलदुस्तरशैलमार्गे ॥39॥

कामिनी सखीं वक्ति। 'पूर्वं प्रियः ममोररशयनमेव प्रियतममन्यत। परं त्वधुना वित्तार्जनमधिकमिच्छन् शुष्कमरुस्थल्यां गच्छति। तत्रोष्णवातेन शुष्का बीजानि, गुलीषु वातेरितेषु, शब्दं कुर्वन्ति। शब्दोऽयं मरोर्विजलत्वं दुस्तरतां च प्रकटीकरोति। सुलभं सुखं विहाय दुःखमेवेप्सति मे प्रिय 'इति। मरुस्थलीविभागे। वसन्ततिलका वृत्तम्।

**28. The girl to the friend :**

The lord of my heart who ceased to like
Sleeping in the space between my breasts
Left for hilly desert wastes
Where, it is said, fiery winds
Shake with power the branches of the trees,
The vahai trees whose bone-dry nuts
Dashing against their shells set up
A rattling noise!

(Kuruntokai 39)

29. कः संबन्धस्ते च मे मातुरस्ति किं बन्धुत्वं त्वत्पितुर्मत्पितुश्च।
प्रेम्णः पूर्वं नावयोः संगलेशः एकीकुर्वन्प्रेमबन्धो युनक्ति ॥
पर्जन्यरससंपृक्तरक्तमृत्कर्दमो यथा।
चेतसी चावयोरद्य संयुक्ते समवायिनी ॥40॥

नायकः नायिकां वक्ति। वियोगभीरुं तां सान्त्वयन् भगवत्संकल्पेनैवावयोः संगमः संभूतः तस्मात् वियोगो न भविष्यति कदापीति वदन् एवं वक्ति। तव पित्रोर्मे च पित्रोः न कोऽपि संबन्धः। पूर्वं न परिचितौ, प्रेम्णः उदयादनन्तरमेव परिचयः संभूतः। प्रेमबन्धेनैवावां दृढतरं संयोजितौ। आकाशात्पतितं तोयं रक्तरङ्गमृत्सबन्धमेत्य कर्दमो यथा भवति, यथा च तस्मात् जलं मृदिति पृथक्कर्तुमसाध्यं भवति तथैवास्माकं संयोगोऽप्यविभाज्यः मा भैषी'रिति। पर्वतविभागे। प्रथमस्य शालिनीवृत्तम्। द्वितीयस्यानुष्टुप्।

**29. The young man to the girl :**

My mother and yours — do they know,
Are they acquinted, each with the other?
Are our fathers, in any way, kin?
Did you and I know each, the other
Before we met by fate's decree?
We came together, like the drops of rain
On the loose red earth of the mountain side
Making a whole, merging together
In indissoluble harmony;
Our souls have fused at fate's bidding.
And we shall not, dearest, be parted, ever!

(Kuruntokai 40)

30. कान्तो यदा सह मयास्ति मुदा तदालि ग्रामे महोत्सवभुजामिव मे प्रहर्षः।
तस्मिन् गते गृहमिवास्मि पुरे विविक्ते ह्यारान्मरोश्चमरपुच्छविहारयोग्यम् ॥41॥

कामिनीवचनं सख्यै। 'संयुक्ता वल्लभेनाहं ग्रामोत्सवे व्यापृतानां यथोत्साहः भूयात् इतरेषां संकटानां विस्मृतिरपि स्यात् तथैवाहं प्रहृष्टा अस्मि। तेन विप्रयुक्ता तु एकाकितामनुभवामि।' तस्य दृष्टान्तमाह-मरुस्थल्या आरात् पूर्वमासीत् जनभूयिष्ठं किंचित्पुरम्। जलस्यापर्याप्तेः कारणात् जनैर्विसृष्टं विविक्तमभूत्तत्पुरम्। नितरां विविक्ततया कातरस्वभावाश्चमरपुच्छा अपि गृहाङ्गणेषु क्रीडितुं प्रारेभिरे। मया अनुभूयमानस्यै काकित्वस्येदं पुरमेवोदाहरणं भवति।' मरुस्थलीविभागे। वसन्ततिलका वृत्तम्।

**30. The girl speaks :**

You ask me why I pine away
My youth, my prescious youth, in tears.
When my lover stays by me
My heart is joyful, my heart is gay,
Even like a village on the eve of a feast.
But when he leaves as he has done,
My heart does get in time to be
Like a house in a village on the desert fringe
Busy once with teeming streets
Now with the desert marching on,
Forsaken by its people, doomed
Where in the courtyards free from men
The timid squirrel frisks about
In playful freedom : my heart gets empty,
Sad and lonesome like the house
Once full of life, now all in ruins.

(Kuruntokai 41)

31. यस्याचले पूर्वनिशीथवृष्टेः शब्दायतेऽद्यापि जलस्य पातः।
तेन त्वयि स्नेहरसः प्रभूतः विशीर्यते नैव विनापि योगम् ॥42॥

सखी कामिनं वक्ति। कामी पूर्वस्मिन् काले प्रतिदिनं संगमेच्छयागच्छत्। परं तु अधुना केनापि कारणेन नायाति। एकस्मिन् समये दैवात्तं वीथ्यां दृष्ट्वा सखी तमेवं ब्रूते। 'तव प्रियायाः कामः सर्वोत्कृष्टः। इतरासां कामाः संगमैरेवानुस्यूततां प्राप्नुवन्ति। तस्याः कामस्तु नैवं प्रकारः। अधुना संगमेन विनापि पूर्वकृतस्नेहस्मरण देवानुस्यूततां प्राप्तः अक्षुण्णो वर्तति। तव गिरो पूर्वदिनस्य वृष्टेः कारणादद्यापि निर्झरः नीरं वहन् शब्दायति। एष एव तस्याः कामस्य चिह्नभूत' इति। पर्वतविभागे। उपजातिः वृत्तम्।

**31. The friend to the boy :**

Chief of the hills where on the slopes,
Waterfalls echo still to the skies
After the rains of the night have ceased,
Her involvement shall continue
Even if you do not meet :
Her love shall live on undiminished,
Unnourished by nightly tryst.

(Kuruntokai 42)

32. गच्छेन्नैवं मां वियुज्येति नूनम् निर्विण्णाहं वारणे वीतचिन्ता।
गन्तुं तस्मै संमतिं नाहमालि दास्यामीति व्यस्तरागोऽयमासीत् ॥
इत्थं भिन्नं शक्तियुग्मेन चित्तं व्यत्यस्तेनोद्दीप्तपुंस्त्वाङ्कितेन।
ग्रस्तं सम्यक् तद्यथाशीविषेण दुःखाक्रान्तं मे तथैवाकुलं च ॥43॥

नायिका सखीं वक्ति। 'मां विहाय स नैव गच्छेदिति तस्य गमनाद्वारणे वीतचिन्ता निर्वेदपराहमासम्। सा मे संमतिं नैव दद्यादित्येवायमपि व्यस्तराग आसीत्। इत्थं भिन्नयोः शक्तयोराघातेन समुद्दीपितपुंवदाग्रहगुणेन ग्रस्तं मे हृदयं सर्पेण ग्रस्त मिव दुःखाक्रान्तमाकुलं चे'ति। मरुस्थलीविभागे। शालिनी वृत्तम्।
(नायिकां विहाय स पुरान्तरं धनसंचयार्थं गत इत्येवोह्यते)

**32. The girl to the friend :**

I did not care
To stir myself
To prevent him
From going away
As I believed
He would never
Like being parted
From me for long.
He did not seek
Leave to go
From me, fearing
I would refuse.
Now torn between
The two forces
So mighty, manly
My heart suffers
As if in the grip
Of a venomous serpent!

(Kuruntokai 43)

33. पदे चिरं संचरणात्क्लमं गते चिरेक्षणान्न्यूनबले मदक्षिणी।
सविस्तरव्योमगतोडुसंहतेरतीतसंख्या इतरे महीतले ॥44॥

धात्री स्वागतम् वक्ति। कामिनी रात्रौ गृहात्प्रस्थाय कान्तेन सह गान्धर्वक्रममनुसृत्य पलायिता। तावन्विष्य मरुस्थल्यामितस्ततो विचिन्वती तावपश्यन्ती अन्यान् बहून् पश्यन्ती मनस्तापेनैवं ब्रूते 'अस्मिंल्लोके इतरे बहवो वर्तन्ते ते व्योमगत-नक्षत्रसंहतेरतीतसंख्याकाः। परं तु मम दुहितरं तं युवानं च न कुत्रापि पश्यामी'ति विलपति। मरुस्थलीविभागे। वंशस्थं वृत्तम्।

**33. The foster-mother to herself :**

My daughter and her mate
Are nowhere to be seen.
How far have I wandered
How vain my search has been!
My legs are weak and wobbly.
With all this wandering : the eyes
Do not see clearly
They are strained, weary, dim.
But where, O where are they?
I do not see them; but
I see plenty others.
How many are there,
The teeming, vexing others
That greet my eager eyes
Wherever I turn
Superfluous couples
That crowd the narrow earth
More densely than the stars
That speck the firmament!

(Kuruntokai 44)

34. उषसि पुरपतिः प्रबुध्य याति स्त्रियमुपगूहयितुं विपण्यशीलाम् ।
पतिमपि सहते प्रसन्नतायाः प्रमथनहेतुरिदं बताभिजात्यम् ॥45॥

सखी नायकस्य सखायं वक्ति। 'प्रतिदिनं तव सखा प्रबुध्य विपण्यशीलां स्त्रियमुपगूहयितुं वाराङ्गनासंगमार्थं गच्छति। एवं दुर्वृत्तमपि पतिं स्वस्याः गुणविशेषात् 'चित्ते निष्कलङ्कोऽयं, प्रसन्न एवे'ति वदन्ती सहते, तं नाधिक्षिपति। अहो बत आभिजात्यमिदं मनसः प्रमथनहेतुरि'ति। नायिकायाः सहनशीलत्वं तस्या आभिजात्यात्संभूतमेव। एवंप्रकारेण दुर्वृत्तमुद्दिश्य सहनशीलत्वेनाचरणं न युक्तं मन्यते सखी। नदीतीरविभागे। पुष्पिताग्रा वृत्तम्।

**34. The friend of the girl to a friend of the husband :**

The first act of your friend
On getting up in the morning
Is to ready his chariot
And speed away, intent
On embracing the call-girls.
But his son's mother thinks
He's blameless, suffers him!
This being high born, fellow,
Is behind all this folly!

(Kuruntokai 45)

35. यत्रोपलः पीतसुमैर्निगूढः संलक्ष्यते व्याघ्रकिशोरतुल्यः।
मार्गे रहःसंहतये गतस्य दीर्घलसच्चन्द्र रिपुस्त्वमस्य ॥47॥

सखी चन्द्रमेवं वक्ति।

शिलानां मध्ये वन्यमार्गः प्रकृत्या अपायवाहुल्याद्वर्जनीयः विशिष्य रजन्याम्। विवाहात् पूर्वं संहत्यर्थं वल्लभः एतादृशे मार्गे आयातीति दुःखिता सखी वल्लभे निकटस्थे सति चन्द्रमुद्दिश्य 'शुभ्रं प्रकाशमानस्त्वं तस्य प्रेमिणः रिपुः, यतः नः पितुर्भटैर्लक्ष्ये त सः। इति वदति, विवाहार्थं तं चोदयन्ती। पर्वतविभागे। इन्द्रवज्रा वृत्तम्।

**35. The friend addressing the moon says this, with the hero listening in, concealed :**

He comes of nights
Unfailingly
To keep his love tryst
Walking the uplands
Wooded, eneven,
Where boulders, covered
By the striped blossom
Of the vengai tree
Look even like
The cubs of a tiger.
O moonlight bright,
Long-lasting, white
You are no friend
To the one that walks
The jungle path!

(Kuruntokai 47)

36. रत्नाभनीरनिधितीरजगुल्मशल्यं प्राणेश ते चमरपुच्छरदोपमेयम् ।
भर्ता त्वमेव धव मे जननान्तरेषु त्वच्चित्तकलिपतगृहा च भवे भवे स्याम् ॥49॥

कामिनीवचनं धवं प्रति। यस्य समुद्रतीरे गुल्मस्य शल्यं, कण्टकं, चमरपुच्छाख्यस्य जन्तोर्दन्तेनोपमेयमस्ति स त्वं इतः परमपि प्रतिजन्म मे भर्ता, अहं ते हृदयवासिनी भार्या स्यामि'ति। भारतदेशे अयमेव जनानां धर्मे प्रत्ययः प्रतिजन्म एक एव पुमान् स्त्रियमेकामेवोद्वहेदिति। रघुवंशे सीतायाः वचनमपि स्मर्तव्यमत्र। समुद्रतीरविभागे। वसन्ततिलका वृत्तम्।

**36. The girl to the boy on his coming home from the prostitutes :**

O lord of shorelands
Where the flowering shrubs
With scented pollen
Sport thorns on them
That look like the teeth
Of squirrels, where
The water is blue
Like a blue diamond!
In the lives that follow
This present one,
You shall be
The lord of my heart :
And I shall be
The sole occupant
Of the throne in your heart
O chief, in all
My succeeding lives!

(Kuruntokai 49)

37. हस्ती गोप्तृभिरीरितोपलभयान्नम्रीकृतं यत्नतः
सद्यो मुञ्चति कीचकं स बडिशं मत्स्यं गृहीत्वा यथा।
नम्रत्वं विसृजेत्तथैव दयितस्यैवंगते चेष्टिते
तिष्ठाम्यत्र हि निश्चला मम पुनः स्त्रैणत्वमस्याश्रयः ॥54॥

नायिका सखीं वक्ति। 'क्षेत्रस्य गोप्तृभिरीरितादुपलाद्भीतो गजः स्वेन भक्षणार्थं नम्रीकृतं कीचकं वंशवृन्तं सद्यो विमुञ्चति। स वंशः झटिति स्वाभाविकीं अनम्रस्थितिं भजते। मत्स्यग्रहणार्थं जले पातितं बडिशं मत्स्ये गृहीते यथा स्वस्थितिं प्राप्नोति तथैव। दयितेप्येवं भूते सति किंकर्तव्यतामूढाहमत्रैव निश्चला तिष्ठामि। मम स्त्रैणत्वं तु वल्लभमाश्रितं न मां पुनरेति।' इति। वल्लभः पुरा नायिका दर्शनलोलुपो यदासीत् तदा विनम्रस्वभाव आसीत्। तस्या अल्पीयसीः आशा अपि पूरयितुं सिद्धः आसीत्। परंत्वद्य गजेन मुक्तः कीचक इवानम्रस्थितिं भजमानः तस्याः दुःखं अपश्यन् अनादरः संजात इति भावः। पर्वतविभागे। शार्दूलविक्रीडितं वृत्तम्।

**37. The girl to the friend :**

I am here, helpless and my feminine graces
Have been grabbed by the chief of the mountain
Where the green stem of a full-grown bamboo
Bent down by a jungle elephant
Is suddenly let go by the animal, panicking,
Hearing the sound of a stone discharged
By a sling by the wakeful watchman-farmer
And the bamboo resumes its wonted position
Just like the line cast by a man, fishing.

(The girl ruefully recollects how subservient, attentive, considerate the lover had been earlier and how ram-rod stiff he had become, of late. The analogy is put in to suggest this change of attitude on the lover's part)

(Kuruntokai 54)

38. प्रसूनानि श्यामान्युदाधिपरिवाहेऽत्र पवनः
पिधायाब्धेर्वीचिप्रसृतजलबिन्दुर्जडतरः ।
वियुक्तानां तापं जनयति स यत्र प्रहरणात्
मितायुर्हेमन्ते पुरमिदमहो दुःखजनकम् ॥55॥

कन्योक्तिः सखीं प्रति । जडतरः अत्यन्तं शीतः पवनः तरङ्गजलबिन्दून् प्रसार्य श्यामकुसुमानि संपुटीकृत्य वियुक्तानां दुःखं जनयति । तस्मादिदं पुरं मितायुः, वासिनां आयुः परिमितमित्यर्थः दुःखजनकं च विशिष्य हेमन्ततौं । समुद्रतीरविभागे । शिखरिणी वृत्तमेतत् ।

**38. The friend to the girl, with the boy listening in, concealed :**

The sky is overcast. A cold wind blows
Bitter, closing shut the gem-like bloom
In the lagoon blue. The ceaseless waves of the sea
Dash against the beach flinging foamy drops.
This goody, little town in truth does offer
But the briefest lives of bitter anguish, dear,
To all its residents!

(The boy tends to postpone the wedding and the friend is attempting to prod him to take effective steps, through these words)

(Kuruntokai 55)

39. अपि प्रसूनेन कृतान्तरायौ तं विप्रयोगं क्षणिकं विहङ्गौ।
हेतोर्व्यथायाः किल वर्षभोग्यं ह्रदे वसन्तौ सखि मन्यमानौ ॥
विज्ञातबन्धौ प्रतिजन्मसक्तावतर्प्यकामाववियोज्यभावौ।
आवां शुचो निर्गमनाय तूर्णं समं मृतौ स्याव तदीप्सितं स्यात् ॥57॥

नायिका सखीं वक्ति। 'महन्रिल् इत्याख्यपक्षिजात्यां महान् प्रेमबन्धो दृश्यते। जलवासिनोः पक्षिदंपत्योरन्तरे प्रसूनमेकमन्तरायभूतं यदि स्यात् तस्माज्जातं क्षणिकमपि वियोगं वर्षभोग्यं मन्येते, व्यथायाः हेतोः। ताविव स्थिरप्रेमबन्धौ प्रतिजन्मसक्तत्वात् विज्ञातप्रेमपाशौ सर्वथाप्यतर्प्यकामौ (आवयोः कामभोगे पर्याप्तिर्नैव भवेत्) अवियोज्य भावौ अधुना मात्रा परिरक्षितत्वात् संगमं नाप्नुवानौ सममेककाले मरणं यदि प्राप्नुयाव तर्ह्येव शोकात् निर्गमनं स्यात्, तदेवेप्सितमपि स्यादि'ति। समुद्रतीरविभागे। उपजातिवृत्तम्।

**39. The girl to the friend :**

Life has nothing to offer me
When alone I sit in morbid brooding
While the slow day crawls to dismal evening
And the night that seems to last forever.
Like the mahanril bird which languishes
If a lotus bloom conceals her mate
For the space of a moment from her field of vision,
I welcome death in his company
Rather than exist through endless years
In cheerless loneliness.

(Kuruntokai 57)

40. गातृभ्यः सुमृदङ्गवादनकलानैपुण्यभाग्भ्यो धनं
दत्वा यः परिपोषयत्युरुयशास्तस्याद्रिकुण्डे प्रभोः।
संजातैः सुरभीभिरद्रिकुसुमैः सार्धं ग्रथित्वा स्रजं
वासन्तीभिरलंकृतासि सखि ते गन्धो ललाटस्य यः ॥
प्रेमालिङ्गनसंनिकर्षसमयेष्वाघ्राय तं वल्लभः
विस्मर्तुं न हि शक्नुते सखि जवादायाति तच्चोदितः।
उद्दिष्टार्थमशक्यमर्जितुमयि व्याघातबाहुल्यतः
गन्तव्या च मरुस्थली प्रियतमो नायं चिरायेत्पथि ॥59॥

सखी नायिकां वक्ति। सुगमोऽयमर्थः। 'नायको दयावान् गायकेभ्यः धनं ददाति तान्पोषयति च। तस्याद्रिकुण्डजातकुसुमैरलङ्कृतासि। तव ललाटस्य सौरभं स जानाति। तत् स्मृत्वा शीघ्रमेवायाति तव पार्श्वम्। उद्दिष्टं धनं संपादयितुं न शक्यं विघ्नानां बाहुल्यात्। मार्गश्च मरुस्थलीमध्यगः तस्मात् स पथि न चिरायेदि'ति। मरुस्थलीविभागे। शार्दूलविक्रीडितं वृत्तम्।

**40. The friend to the girl :**

The lord of the hills, a patron of arts
Keeps all musicians well-fed, happy.
The flowers from his hills wreathed into garlands
Bedeck your hair, with their sweet bouquet
He knows and loves the sweetest scent
Your forehead gives off when you are embraced!
He will remember and wish to relive
That joyous experience, he will hurry back
To be with you! The task of earning
The targeted wealth will prove easy for him
His path shall lie through waterless wastes.
He will not tarry on the way
He shall hasten back to you!

(Kuruntokai 59)

41. क्रीडार्थं परिकल्पितां शकटिकां तक्षेण बालाः स्वयं
कर्षन्तो मुदमाप्नुवन्ति नितरां नास्मिन्निषण्णा अपि।
नैतेनापि समागताहमधुना स्मृत्वानुभूतान्यहान् -
युद्भिन्नप्रणयेन निर्वृतिपरा तूर्णं स्थितं कङ्कणैः ॥61॥

नायिका सखीं वक्ति। पतिर्वेश्यावशं गतः भार्यां परिहरति। तमुद्दिश्य दूषणवार्तां ब्रूते सखी। तामाकर्ण्य प्रतिवचनमेवंप्रकारेण वक्ति पतिव्रता। 'बालकाः शकटिके न निषण्णाः परं तु तत्कर्षणेनैव संतुष्टा भवन्ति। एवमेवाहमपि तस्मिन् असंनिहिते तेन सह मयानुभूतसंयोगसुखं स्मरन्ती सुखिनी भवामि। मम हस्ते वलयानि स्थिरं तिष्ठन्ति न स्खलन्ति प्रकोष्ठात्। न विरहात् कार्श्यमनुभवामि' इति। नदीतीरविभागे। शार्दूलविक्रीडितं वृत्तम्।

**41. The friend of the girl (now a married woman) to a messenger from the straying husband :**

Boys at play do not travel on
The wooden toy-horse fashioned by
The carpenter, but they pull it about
And feel delighted with the wooden play-thing
In like manner I derive pleasure
Recollecting the days we had
Together, as man and wife.
I do not have to be with him
I do not need his company
And my bangless stay put still upon
My wrists; I'm happy. I'm fulfilled!

(Kuruntokai 61)

42. त्वां चित्त या समपकर्षति मे प्रसह्य तस्याः शरीरमतिपेशलमुद्भिदोऽपि।
नीलोत्पलादिकुसुमैः श्रितगोप्रचारैर्बद्धस्रगाभमतुलं परिरम्भरम्यम् ॥62॥

कामिवचनं स्वगतम्। सुगमोऽर्थः। कामस्य प्रारम्भकाले केवलं सुखमेवानुभवतः कामिन उक्तिरियम। तदा कामः पूर्णतां गमिष्यति वा न वेति कापि शङ्का नोत्पन्नास्ति। पित्रोर्भयमपि नोत्पन्नं स्यात्। तस्मात् हे चित्त ममेति आहूयात्मगतमेवंप्रकारेण कामिन्याः वर्णनं कुरुते। पर्वतविभागे। वसन्ततिलका वृत्तम्।

**42. The boy to himself :**

Like a garland wreathed
By expert hands
Using the kodal
And the newly-opened
Mullai blossom,
Inter-wreathed
With the sweetest-scented
Blue-bell blooms,
Her sweet-smelling body
Is more tender
And velvet-like
Than a fresh young sprout
And
It's surpassing sweet
For a tight embrace!

(Kuruntokai 62)

43. दानं च भोगश्च धनैकसाध्यौ तन्मां मनश्चोदयसि प्रयाणे।
सार्धं मयायाति मनोज्ञकान्तिस्त्वां वा विना ब्रूहि मयैव गम्यम् ॥63॥

कामी स्वगतं वक्ति। 'दानं सुखानां भोगश्च धनसंचयेनैव साध्यौ। तस्मात् तद्धनार्जनार्थं विदेशं गच्छेति मां चोदयसि हे मनो मम। परं तु सा मनोज्ञकान्तिः कामिनी मया सार्धम् आयास्यति वा न वेति ब्रूहि। तस्या अनागमनेऽपि प्रस्थातुं किं मां चोदयसि? तया मरुस्थलीमार्गे मया सह प्रयातुमशक्यमेवेति विशदम्। तस्मात् धनमवश्यमपि तदर्थं न गमिष्यामि, तया साकं निर्धनोऽपि पुरेऽस्मिन् सुखं वस्तु मिच्छामि' इति। मरुस्थलीविभागे। इन्द्रवज्रा वृत्तम्।

**43. The young man addressing his heart :**

The poor cannot give nor can they
Enjoy pleasures; for this reason
You urge me on to go out and work.
Will that comely girl come out
To be with me when I toil?
Or are you urging me to go
Alone, without her? Speak out, my heart!

(Kuruntokai 63)

44. दूरं याता धेनवो गोप्रचारे गोष्ठं प्राप्ता नैव वेति प्रतीक्ष्य।
शोकाविष्टाः श्यामदीर्घाक्षवत्साः शीर्षाणीमे तीव्रमुत्तोलयन्ति ॥
अर्के याते पृष्ठतः पश्चिमाद्रेः तीव्रीभूतप्रोषितेशप्रतीक्षाम्।
दुःखाक्रान्तां दूरदेशं गतोऽयं ज्ञात्वाप्येवं वर्तते दूर एव ॥64॥

कामिनी सखीं वक्ति। यथा वत्साः स्वमातॄणां प्रत्यागमनप्रतीक्षां सोत्कण्ठं कुर्वन्ति शीर्षोत्तोलनेन, तथैवाहं प्रोषितस्य वल्लभस्य प्रतीक्षां सव्यथां करोमि। एषां मे स्थितिं ज्ञात्वापि स दूर एव वर्तते नायाति मत्सकाशमि'ति। गोप्रचारविभागे। शालिनी वृत्तं।

**44. The girl to the friend :**

The cows have gone to graze
It's even/tide and the calves
Black-eyed, of lovely form
Raise their forlorn heads
In eager expectation
Of their mothers returning.
The sun has set, my friend,
How weary are my eyes
Through protracted gazing
In anxious expectation
For him that keeps away
Knowing how I suffer!

(Kuruntokai 64)

45. यमुक्तवानवधिमयं निवृत्तये न चागतः सलिलनिपातमल्पधीः।
अकालिकं परमवगम्य चार्तवम् सुमैर्घनस्तरुनिवहः प्रसीदति ॥66॥

सखी नायिकां वक्ति। 'वर्षाकालस्यारम्भ एवागमिष्यामि गृहमित्युक्त्वा गतोऽयम्। वर्षर्तुरागतः। तरवः सुपुष्पिताः। परं त्वयं नागत' इति विलपन्तीमेवंप्रकारेण छद्मना प्रसादयितुमिच्छन्ती सखी, 'वर्षाकालः नागतः यमयं स्वनिवृत्तये अवधिमुक्तवान्। अकालिकं सलिलपातमेष तरुनिवहः अल्पधीः आर्तवं वर्षं मत्वा सुमानि, पुष्पाणि घनत्वेन जनयित्वा प्रसन्नस्तिष्ठति। मूढस्य अस्मिन् कर्मणि मा प्रतीतिं कुर्वि'ति वदति। असत्यमपि परेषां दुःखनिवारणार्थमुक्तं सत्यत्वेन परिणमति। गोप्रचारविभागे। रुचिरा वृत्तम्।

**45. The friend to the girl :**

It is not yet the proper season
For the rains to come down – the season when
He who is treading the pebbly paths
Of desert wastes assured us
He would be back. These konrai trees
With their broad trunks have come out with
Blossoms, close-set in every branch
Mistaking some casual showers
As seasonal rain; they sure must be foolish!

(Kuruntokai 66)

46. दीप्तं काञ्चननाणकं शितनखे न्यस्तं कलादेन यत्
सूत्रे हेममये प्रगुम्फनकृता कान्त्यैव तत्साम्यगम् ।
चञ्चुग्रस्तफलं शुकेन रुचिरं निम्बप्रभूतं प्रिये
पश्यन्दग्धतले मरौ विसलिले किं मां स्मरेद्वल्लभः ॥67॥

नायिका सखीं वक्ति। 'मम वल्लभः दग्धतलमरुस्थलीं गच्छन् तत्र रक्तं निम्बफलं खादयन्तं शुकं पश्येत्। शुकेन चञ्च्वाग्रस्तं फलं कलादेन स्वर्णकारेण ग्रस्तं सौवर्ण नाणकं स्मारयति। एतादृशादाभरणस्मरणात् स आभरणैर्भूषितां मां स्मरति वे'ति। 'यदि स्मरेत् ध्रुवं मां द्रष्टुं शीघ्रमायाति' इति तस्या आशा। अस्मिन्पद्येऽतिसूक्ष्मतया ध्वनितं कमपि भावं आस्वादयितुं शक्यम्। प्रायशः मनुष्यः यस्मिन् विषये बद्धभावस्तमेव चिन्तयति, तत्संबन्धीनि उपमानान्येव तन्मनसि द्योतन्ते। एतदनुभववेद्यम्। यदि वल्लभः शुकग्रसत निम्बफलं दृष्ट्वा स्वर्णकारस्य कर्म स्मरति तत्साम्यात्, तर्हि तस्य मनसि स्वर्णसंबन्धिचिन्तनमेवोद्रिक्ततया द्योतते। 'स स्वर्णसंचये एव बद्धश्रद्धः तदर्थं मां विहाय गतः कथं मां स्मरिष्यती'ति सा व्यथते। मरुस्थलीविभागे। शार्दूलविक्रीडितं वृत्तम्।

**46. The girl to the friend :**

In the course of his travels through the burning desert
He might see a parrot grasping the fruit,
The blood-red fruit of the sparse neem trees
With its ruddy beak; and instantly the scene
Of a goldsmith holding with his sharpened nail
A coin of gold to introduce
A fine gold thread through the hook provided
Will appear before his mental eye
Seeing this, will he, my friend,
Think of me, remember me?

(The coin of gold with a gold thread through its hook is symbolic of an Indian wedding)

47. स तित्तिरीपादसरागवृन्तमाषं ग्रसत्येणगणो यदालि ।
तदा वियोगोद्भवरोगजायुः नान्यो मदाश्लिष्टभुजान्तरालात् ॥68॥

नायिका सखीं वक्ति । 'यदा तित्तिरीपादेन समवर्णवृन्तादुद्भूतं माषं स एणगणः मृगयूथं ग्रसति तदा वियोगात् यो रोग उद्भवति तस्य जायुः औषधं मदाश्लिष्टधववक्षः एव नान्यत् औषधं पश्यामी'ति । माषोद्भवः शिशिरकाले । नर्ष्तुर्यदारभते तदागमिष्यामीति प्रतिज्ञां कृत्वा गतः धवः शिशिरर्तावपि नायात इति दुःखात् सरुजा भवति नायिका । तद्रुजाया औषधं धवस्य परिष्वङ्ग एवेति वदति दुःखिनी । पर्वतविभागे । उपजातिः वृत्तम् ।

**47. The girl to the friend :**

Herds of deer
Are eating up
Black gram sheaves
That grow upon
Stems that are red like
The feet of a partridge.
There is no cure
For my illness
Accentuated
By the coming in
Of the cold season,
Except his chest
With which he used
To embrace me,
Those scented days.

(Kuruntokai 68)

48. पञ्चत्वं स्वधवे गते तव नगे शाखामृगे तत्सखी
देहत्यागविनिश्चया विरहतः पत्युर्भृशं दुःखिता।
सन्न्यस्यात्मसुतं स्वबन्धुषु गिरेः कूटात्पतित्वा मृता
रात्रावद्रितटे तवाग्र्य सरणात् प्राणान् प्रिया त्यक्ष्यति ॥69॥॥

सखीवचनं कामिनमुद्दिश्य। सा कामपूरणार्थं गिरितटे सापाये प्रतिरात्रि आयान्तं कामिनं तस्मान्निवारयितुं विवाहप्रयत्नकरणे चोदयितुं चैवंप्रकारेण वक्ति। 'यथा वानरी स्वधवस्य मरणानन्तरं स्वात्महतिं करोति स्वसुतं बन्धुवर्गे सन्न्यस्य, तथैव कन्येयमपि त्वय्यपायहते स्वप्राणान् त्यक्ष्यति' इति। पर्वतविभागे। शार्दूलविक्रीडितं वृत्तम्।

**48. The friend to the boy, turning down his request for nightly trysts :**

The male monkey with dusky eyes
Lay dead; and its mate, unable
To bear the anguish of widowhood
Entrusts her cub, too young, unschooled
In the ways of its tribe, to its herd
And takes its life by plunging down
From the top of the hill of which you are chief!
Please do not ask for nightly trysts;
That will grieve us. May you live long!

(Kuruntokai 69)

49. ललाटरम्या रुचिरालकेयं सगन्धशीतप्रकृतिश्च बाला।
परं तया स्याद्यदि विप्रयोगः तदा पुमांसं नितरां हिनस्ति ॥

मिष्टा मिता वाचि सुपेशला च सालिङ्गिता मेंऽसयुगेन गाढम्।
तूलोपधानोपमसौकुमार्या न तां पदैर्वर्णयितुं क्षमोऽहम् ॥70॥

नायकस्य आत्मगतम्। सुगमोऽयमर्थः। 'ईदृक्शीतलप्रकृतिः पेशलं मिष्टं मितं च भाषमाणा कथं विप्रयोगे मां हिनस्ति?' इति विस्मयाद्वक्ति। 'न तां वचोभिर्वर्णयितुं क्षमोऽहमि'ति। संघशृङ्गाररससाहित्ये एवंप्रकारेण कृतं शरीरप्रकृतिवर्णनं विरलमेव। पर्वतविभागे। प्रथमपद्यस्योपेन्द्रवज्रावृत्तं, द्वितीयस्य तूपजातिः।

**49. The boy to himself :**

The youthful girl
With the shining forehead
And curly hair,
So fragrant, cool
Is yet apt
To give one trouble
During the time
Of separation.
I do not know
How, fittingly
To praise her virtues.
She talks so little
But sweet beyond measure
And soft is her speech!
And when I hold her
In tight embrace,
She is so tender,
So sweetly delicate!

(Kuruntokai 70)

50. जातेयमद्रिवनवासिषु काम्यबिन्दुसंपुष्टबालकुचयुग्मयुता महांसा।
श्रोणीकृशा भवति भेषजमातुरस्य द्रव्यं महार्हमुपभोगपरस्य पुंसः ॥71॥

नायकः स्वगतम्। द्रव्यार्थं देशान्तरगमनाय यदा तन्मनश्चोदयति तदात्मगतं वक्ति। 'सा पर्वतवासिषु जाता संपुष्टबालकुचयुग्मयुता सुन्दरी कृशश्रोणी महांसा, पृथुस्कन्धा च। तस्याः कुचयोः काम्यविन्दवः दृश्यन्ते। एतैः कारणैः सा व्याधिपीडितस्य भेषजं भवति उपभोगपरस्य पुंसः महार्हं द्रव्यं च। कथमीदृशीं विहाय द्रव्यार्थं प्रवासं गन्तुं शक्यम्। इदं हस्तगतं द्रव्यं विहाय को वा उपयोगः विदेशगमने' इति। मरुस्थलीविभागे। वसन्ततिलका वृत्तम्।

**50. The boy to himself, deciding against leaving for distant climes to amass wealth :**

This little girl of the mountain folk
With handsome marks on her
Whose breasts are comely, well-nourished
With shoulders wide and rounded
And a narrow wispy waist, to me
Is medicine for my illness
But if I need and crave for wealth
She is the hoard for me!

(Kuruntokai 71)

51. कार्पासान्तरिताणुधान्यविकचे विद्रावयन्त्याः खगान्
कस्याश्चिज्जलदप्रशीतकुसुमस्निग्धोल्लुठत्प्रेक्षणे ।
व्यापारे तु निशातसायकनिभे मिष्टस्वनायाः सखे
जानीते निखिलं यथा जगदिदं मां पीडयेते तथा ॥72॥

'त्वयि कश्चिदभेदो दृश्यते, किंकारणः स' इति पृच्छन्तं सखायं नायको वक्ति।' कार्पासवीजैः सहोप्ताणुधान्यविकचे तत्खादितुमागतान्विहगान् विद्रावयन्तीं कांचन बालामपश्यम्। सा मृदुस्वभावा। तस्याः नयने मेघवच्छीते कुसुमवत्स्निग्धे च। परं तु व्यापारे कटुनी निशितबाणसमाने वर्तेते। निखिललोकजना यथावगच्छन्ति तथा मां तस्याः नयने पीडयेते । किं करोमी'ति। पर्वतविभागे। शार्दूलविक्रीडितं वृत्तम्।

**51. The boy to his friend :**

A girl was driving off the birds
From the fields of millet intercropped
With cotton. She had the coolest eyes
Damp like rainclouds, sweet as flowers,
But they act in a cruel manner
Like pointed arrows upon me.
And in the full view of all the people
Torment me in this ruthless fashion.

(Kuruntokai 72)

52. मुख्यस्योरः केवलं वांछसि त्वं छित्वा वृक्षं नन्नभूपेन्द्ररक्ष्यम् ।
जित्वा कोशास्ते यथा दीर्घकोपास्त्वं चापि स्याः मा शुचः क्रूरचिन्ता ॥73॥

सखी नायिकां वक्ति । नायिकायाः सङ्गार्थी वल्लभः रहसि तां द्रष्टुमेव वाञ्छति । विवाहार्थप्रयत्नं नैव करोतीति कारणात् तं तत्प्रयत्ने चोदयितुमेव दिनसंकेतं, रात्रिसंकेतं चोभौ प्रतिषिध्य सखी तं हिनस्ति । 'एवं हिंसा न कार्ये'ति वदन्तीं नायिकामेवं सखी भणति ।' नन्नाख्यनृपतेः गोप्यवृक्षमपि च्छित्वा कोशाः नाम जनाः यथा दीर्घकोपा आसन् तथैव त्वमपि कंचित्कालं कोपिनी भूत्वा हिंसां यच्छ तस्मै । तव वियोगमसहमानः विवाहार्थयत्ने उद्युक्तः स्यादि'ति। इदं न स्वाभाविकं, परं तु कार्यार्थक्रौर्यमिति नायिकां सखी चोदयति। पर्वतविभागे। शालिनी वृत्तम् ।

**52. The friend to the girl :**

You deeply desire, dear,
Embracing the chief,
If so, you should nurse
Over a period of time
A vengeful sentiment
Against him, even like
The Kosas who, in battle,
Worsted Nannan the king
And even felled the tree,
The symbol of royalty.

(The friend goes on cancelling day trysts and night trysts for the meeting of the lovers and when the girl protests pointing out how the lover suffers on that account, the friend, a gifted psychologist, advocates severety to push the lover to make marriage plans).

(Kuruntokai 73)

53. यस्योन्नमत्यवनतो गिरिवंशनालः बन्धाद्विमुक्त इव वाजिरुदात्तवेगः।
स्वस्मिन्सबद्धमिति ते हृदयं न जानन् ग्रीष्मार्दितो वृष इव व्यथते तवार्थे ॥74॥

सखी नायिकां वक्ति। 'रज्जुबन्धाद्विमुक्तोऽश्व इव यत्र गिरौ वंशनालः केनापि पशुनावनतः सहसोदात्तवेग उत्प्लवति ऋजुर्भवति, तस्य देशस्य पतिः न जानाति त्वां स्वस्मिन्बद्धानुरागाम्। परं तु ग्रीष्मेण व्यथितवृषभ इव तवार्थे, त्वं कामयसे न वेति सदुःखोऽस्ति' इति। 'अश्वस्य बन्धविमुक्तस्य धावनं, अवनतवंशस्योत्प्लवनं चेमे यथा नैसर्गिके तथैव तव च तस्य च कामना। अत्र विस्मयस्य वा दुःखस्य वा न कोऽपि हेतु'रिति सूचयति सखी। पर्वतविभागे। वसन्ततिलका वृत्तम्।

**53. The friend to the girl :**

The chief of the hills where the bamboo bent
Straightens itself with force
With the abruptness of a horse kept tied
That's freed in the matter of a moment—
The chief doesn't know how we pine for him
Himself, he sighs for us
And suffers torments even like a bull
Troubled by summer's heat.

(Kuruntokai 74)

54. दृष्टं श्रुतं वागमनं त्वयास्य शुश्रूषुरेनामहमस्य वृत्तिम्।
तां पाटलीं स्वर्णमयीं लभस्व शोणाजले यत्र रतं द्विदन्तैः ॥75॥

नायकस्य प्रत्यागमनप्रवृत्तिहरं गायकं नायिका वक्ति। 'धवस्यागमनं त्वया किं दृष्टं, अथवा तद्दृष्टवतो मुखाच्छ्रुतम्? अस्य प्रवृत्तिं शुश्रूषुरहम्। कथं, केन प्रकारेण, कस्य मुखात्त्वया प्रवृत्तिरियं लब्धा, वद गायक। यत्र शोणायाः नद्याः जले द्विदन्तैर्द्विरदे रतं क्रीडितं तां स्वर्णभूयिष्ठां पाटलीं नगरीं लप्सीष्ठाः।' इति आशास्ते। धवस्य प्रवृत्तौ नायिकायाः नितान्तासक्तिनिरूपकमिदं पद्यम्। नदीतीरविभागे। इन्द्रवज्रा वृत्तम्।

**54. The girl to the bard, friend to the husband :**

Did you see him coming back
Or did you learn this from those who saw him?
How did you come by this news of his return?
Tell me, O bard! and may you obtain
The golden city of Patali
Where in the waters of the Sona river
Elephants bathe and frolic about!

(Kuruntokai 75)

55. मरुस्थल्यां चौरैर्निहतपथिकप्रेतनिचयाः
पलाशैः प्रच्छन्ना ददति करिणे तापशमनम्।
मरुं चेद्दृग्घोरं गत इति भुजौ मे क्षयमितौ
न स स्याद्दोषो यद्यपि भणति लोकः सखि मृषा ॥77॥

नायिका सखीं वक्ति। 'यत्र नाथो गतः स मरुप्रदेशः बहुप्रकारेण भयंकरो दुःखप्रदश्च। चोराः पथिकान् शतशः हत्वा प्रेतान् राशीकुर्वन्ति। अयं पत्रैः प्रच्छन्नो राशिः इतरच्छयाया अभावात् गजानां छायाप्रदानेन तापशमनं करोति। ईदृग्घोरं मरुं स प्रणयी गत इत्येव सततं चिन्तयन्त्याः मे भुजौ क्षयमितौ क्षमं प्राप्तवन्तौ। लोको यद्यन्यथा भणति न स दोषः। तत् मृषैवे'ति। मरुस्थलीविभागे। शिखरिणी वृत्तम्।

**55. The girl to the friend :**

My lord has left for distant climes
Traversing the arid desert
Where elephants seek, in gratitude,
The shade of the heap of the slaughtered bodies
Of wayfarers slain by brigands
With hearts as fiery as the land outside.
Constant brooding over my lord's travails
Has made my shoulders emaciated.
It isn't my fault that I feel for him
Though ruthless tongues may label it so.

(Kuruntokai 77)

56. मुख्य त्वत्पृथिवीधरस्य शिखरान्नीरस्य पातः सितो
विस्तीर्णो नटविद्वदाहतमहाभेरीव शब्दायते।
कामस्यास्य गुणं न किंचिदपि यो जानात्यविद्वान्सखे
तं गत्वा स्थिरमत्र तिष्ठति चिराद्धेयोऽनुरागो जडः ॥78॥

सखा नायकं कामहेतोर्व्यथमानमवलोक्य साधिक्षेपं वक्ति। 'तव पर्वते नीरपातः नटविदुषां महद्भेरीव (नटैराहतभेरीव) शब्दायते। कामो जडः हेयश्च यतः स तस्य तत्त्वमजानतां वशे स्थिरं तिष्ठती'ति। 'कामः साधुरिति सा बाला न जानाति। तस्मादेव त्वां सा न कामयते'ति सख्युरभिप्रायः। पर्वतविभागे। शार्दूलविक्रीडितं वृत्तम्।

**56. The boy's friend sharply admonishing him :**

Chieftain of the hill where the waterfall
Comes down roaring like the drums
Beaten by experts in the art of dancing!
Love is foolish, it's insentient,
For it has a way of getting lodged
In the hearts of people who are strangers to it
Who fail to realise how good it is!

(Kuruntokai 78)

57. संमन्ये नेति नाथः किमपि न कथयन्य प्रयातः कठोरः
गच्छन्नस्मिन्निदाघे रविकिरणसमुद्दीपिते धन्वदेशे।
वन्येनेभेन जग्धत्वचि विषमतरौ वायुसंचालिताङ्गे
यत्र स्थित्वा कपोतो ह्वयति सहचरीं किं विलंबेत मार्गे ॥79॥

नायिका सखीं वक्ति। 'प्रवासं गच्छेय'मिति यदि स मे वदति संमतिं न यच्छेयमित्येव चिन्तयन् कठोरः पतिः प्रयातः। अस्मिन्निदाघे सूर्यदग्धे मरुप्रदेशे वन्यगजजग्धत्वचि विषमे कर्कशे तरौ वायुसंचालिताङ्गे स्थित्वा वियुक्तः कोऽपि कपोतः सहचरीं विरावेण ह्वयति। तत्र निवसन् स मे धवः तच्छ्रुत्वापि विलंबेत किमि'ति। तिर्यग्जातिष्वपि महान्तमनुरागं पश्यन् स कठोरचित्तस्तत्रैव वसेदथवा मरुस्थलीमार्गे पुनः पर्यटेत्किमिति सव्यथं पृच्छति। मरुस्थलीविभागे। स्रग्धरा वृत्तम्।

**57. The girl to the friend :**

Presuming my no for an answer
My lord left to gather wealth
Without taking leave of me.
He traverses the desert wastes
Where, sitting on a branch shaken by winds,
Of a tree whose bark has been wrenched clean
By a hungry elephant for a grateful meal,
A pigeon sends forth plaintive calls
For its mate through the desert air.
Will he, my dear, listen to the notes
And still press on with his travel plans?

(Kuruntokai 79)

58. महीध्रपार्श्वेषु कृषीवलेन लूने हि शस्ये तदनु प्रपुष्टा।
लता समृद्धा सखि शिंबिकाभिर्यस्मिन्स काले शिशिरेऽप्यसह्ये ॥

निवर्तते न प्रियवल्लभो मे का वा प्रवृत्तिर्मयि तत्प्रियायाम्।
पुरा प्रसाध्यायतकुन्तलं यः परामृशन्पृष्ठममार्ढि बाष्पम् ॥82॥

नायिका सखीं वक्ति। 'वर्षाकाले प्रतिनिवर्ते इति नः प्रतिश्रुत्य गतोऽयं वल्लभः अद्यापि नायातः। वर्षाकालोऽवसितः शिशिरर्तुरपि समारब्धः यस्मिन् शिंम्बिकाः समुत्पन्नाः। सः पुरा मदायतकुन्तलं प्रसाध्य पृष्ठं परामृशन् मम नयनवारिणो मार्जनमप्यकरोत्। अधुना का वास्यादस्य प्रवृत्तिः मयि! मामभिलषति वे'ति। पर्वतविभागे। उपजातिः वृत्तम्।

**58. The girl to the friend :**

He used to dry my flowing tears when,
I cried, brushing my curly length of hair
Gripping my back in tender tightness, dear!
Now it's winter, cold windy winter
When the beanstalk flowers where the millet crop
Has been cut by the hill-side farmer since.
It's now winter, bleak winter, when the chieftain
Comes back, dear, how will he be, in truth,
How act before this sorely grieving me?
He used to dry my flowing tears, then,
How will he act on seeing me in torment?

(Kuruntokai 82)

59. प्रत्यङ्गं पनसेषु यस्य फलितः शैले फलानां गणः
गेहे स्वोचितभागभक्षणनिभास्वादो हि यान्यश्नताम्।
मुख्यं ते वरणार्थमागतमिमं धात्री शशंसाधुना
पीयूषं लभतां सुदुर्लभमियं स्वर्गीयमस्मत्प्रसूः ॥83॥

विवाहवरणार्थमागतो धव इति ब्रुवतीं धात्रीं स्तुवती सखी वक्ति। 'यस्य शैले प्रतिशाखं पनसतरुषु फलानि संजातानि, यानि भक्षयतां स्वगेहे स्वोचितधर्म्यभागभक्षणात् यः सन्तोषः संजायेत स जायते, तं मुख्यं वरणार्थमस्मदगृहमागतं ब्रुवती धात्री स्वर्गीयं पीयूषं सुदुर्लभं लभतामि'ति। पनसफलवर्णनं मनोरथस्य पूर्णफलितस्थितिं सूचयति। पर्वतविभागे। शार्दूलविक्रीडितं वृत्तम्।

**59. The friend, in praise of the foster-mother :**

May she, our mother inherit Heaven
So far beyond the reach of mortals,
And enjoy nectar as her daily food–
For, did she not say "The Lord of the hills
Where sweet fruits hang on every branch
Will be coming to ask for her hand!"
- News as sweet as the enjoyment
Of what is one's own by right, imbibed
Right in the heart of one's own residence.

(Kuruntokai 83)

60. रात्रौ पर्यलुठं सुतां प्रति मनाक् शय्यां गतालिङ्गितुम्
स्विद्यामीति ममोत्तरं तदनया दत्तं प्रतीतं तदा।
कीदृक्दुःखकरं मयाद्य विदितं तस्याः मदालिङ्गनं
पुष्पातीतसुगन्धशीतलवपुर्यस्याः सुताया मम ॥84॥

धात्री विलपति। 'रात्रौ सा मम पुत्री मम शय्यायामेव शेते, मयालिङ्गिता। ह्यः मदालिङ्गनात्किंचिदिव व्यपेत्य शयितां दृष्ट्वाहं मनाक् तां प्रति पर्यलुठम्। मदुद्देशं ज्ञात्वा' स्विद्यामि, तस्मादालिङ्गनमधुना मे न रोचत' इति सोत्तरमददात्। तस्याः वचसि प्रतीत्या निद्रां गताहम्। प्रातरुत्थाय तामदृष्ट्वा स्ववल्लभेन साकं सा गृहाद्गता पुरान्तरमिति सर्वैर्ज्ञातमभूत्। पुष्पातीतसुगन्धशीतलवपुः सा मे सुता। तेन वल्लभेन सख्यबन्धानन्तरं मे परिष्वङ्गः तस्याः दुःखप्रदोऽभूदि'ति। मरुस्थलीविभागे। शार्दूलविक्रीडितं वृत्तम्।

**60. The foster-mother, on learning of the elopement of the girl :**

Last night finding my little girl
Had rolled away I tried to move
And hold her tight with my aged arms.
But she said she perspired and seemed inclined
To stay away at the edge of the bed.
I now know why my holding her
In a tight embrace was distasteful
My little girl whose body smell
Was nicer far than the full-blown blossom
Of vengai and kantal on the cloud-topped hill
Ruled by Ay–my girl whose touch
Was cooler far than the ambal bloom.
I realise now why she waved away
My advances to hold her tight.

(Kuruntokai 84)

61. पुर्यां धवस्य चटकः प्रगतिः ससत्त्वसख्याः प्रसूतिगृहसौख्यकृते सयत्नः।
इक्षोर्नितान्तमधुरस्य सितं प्रसूनम् लूत्वा विगन्धमपि नीडमुपैति तृप्तः ॥

गातः पुरे वसति यस्य विहङ्गकान्तः तत्प्रेषितस्य वचसैव हि गायकस्य।
सर्वोत्तमः प्रियतमः स हि सादरेषु कान्ताप्रसक्तिविषयेऽप्यतुलः प्रमुख्यः ॥85॥

सखी नायकप्रेषितं गायकदूतं वक्ति। 'हे गातः, तव मित्रस्य नगरे वसन्कश्चन चटकः (मनुष्यभवनेषु वासप्रियः कोऽपि पक्षिविशेषः) स्वप्रियायाः गर्भिण्याः प्रसूतिगृह-सौख्याय किंचिन्मृदुलवस्तु अन्विष्यन् नितान्तमधुरस्य इक्षुवृन्तस्य विगन्धमपि सितप्रसूनं मृदुलत्वात् लूत्वा नीडमुपैति संतुष्टः। तादृशत्यागशीलः कामी स पतङ्गः। त्वत्सखायं सर्वोत्तमं प्रियतमं तत्प्रेषितस्त्वमेव वक्षि। कान्ताप्रणयविषयेऽपि स निस्सम इति तव वर्णनादेव जानीमः नान्यथे'ति। तत्त्वतः स नायकः कान्ताविषये तावत् नासक्तः यथा स चटकः। रुचिरमिक्षुदण्डं विहाय प्रियायाः सौख्यार्थं विगतगन्धरुचि तत्कुसुममाददाति संतुष्ट इति कारणात्। नायकस्तु दुर्वृत्तः पण्यस्त्रीसंपर्के रतः।' इति तस्मादेव सकोपपरिहासं वक्ति सखी। नदीतीरविभागे। वसन्ततिलका वृत्तम्।

**61. The friend to a messenger from the straying boy :**

We learn of his love
We learn how sweet
Your chief can be,
O singer-friend
From your paean of praise.
In his city,
A humble sparrow
Flying out
To gather things
Downy, soft
To cushion their nest
To accommodate
The eggs its mate
Now pregnant will lay,
Descries a field
Of sugar-cane

And speeds to it
In eager haste.
But do you think
It is out to plunder
The juice of the cane
Sweet beyond words?
No, singer-friend,
The tiny bird
Crops in a hurry
The bloom of the cane
Unscented, bland,
Carries it off
In great triumph
To cushion the nest.
We know, singer,
How filled with love
Your chieftain is,
From the picture you draw -
Our only source.

(Kuruntokai 85)

62. निशि शीकरवातहिमप्रचुरे शिशिरे वहुबाधककीटगणैः।
व्यथितर्षभकिंकिणिसंश्रवणादहमस्मि शुचो वशगा हि सखि ॥
श्रवणाद् व्यथिता इतरा अपि किं नयनाम्बु निरुद्धमतो प्रवहत्।
यदपाङ्गयुगान्नु ताः ललना अविषह्यविविक्तशुचा मथिताः ॥86॥

नायिका सखीं वक्ति। 'शिशिरर्तौ रात्रौ कीटगणैर्व्यथितस्य वृषभस्य शिरः कम्पनात् यः किंकिणीनादः समुत्पद्यते तं श्रुत्वा विनिद्राहं दुःखभूयिष्ठा भवामि। अस्मिन्नगरे एवं विनिद्राः काः अपि एतन्नादं रात्रौ शृण्वन्ति किम्?' इति। वियुक्तायाः अपि विनिद्रत्वं दुःखं च सूचितमत्र। पर्वतविभागे। तोटकवृत्तम्।

**62. The girl to the friend :**

Is there any besides luckless me
Shedding a stream of tears from eyes
Cool, with a handsome streak of red,
And afflicted with the fell disease
Who hears the sound of the terrible bell
Tied to the bulls which oscillates
Everytime they shake their heads
To ward off the flies that torment them
At dead of night, in wintertime
When a persistent wind that is damp and cold
Blows hard wafting drops of rain?
Does anyone hear this dismal sound
But me, but luckless, anguished me?

(Kuruntokai 86)

63. मध्येग्राममुपात्तपादपतलो नृणां भयोत्पादकः
देवो दुश्चरितान् प्रशास्त्यकरुणं सर्वैरिदं ज्ञायते।
नायं दुश्चरितो मम प्रियतमः शैलाधिपः सत्यतः
वैवर्ण्यं त्वभिलाषतोऽसकृशता तस्मिन्मदासक्तितः ॥87॥

नायिकाकृतदेवप्रार्थना। 'मध्येग्रामं पादपस्य तले स्थापितः यो देवः स दुश्चरितान् मनुजान् प्रशास्ति। इदं सर्वैरेव ज्ञातम्। परं तु मम धवो न दुर्वृत्तः नासत्यवादी च। स्वोद्दिष्टदिने यदि नायातस्तर्हि तस्य किमपि कारणं स्यात्। मम वैवर्ण्यं दृष्ट्वा पुरस्त्रियस्तद् धवस्य कैतवत्वाज्जातमिति किंवदन्तीं प्रसारयन्ति। तन्न सत्यम्। मद्वैवर्ण्यस्य ममानुराग एव कारणम्। यदि मद्भुजौ कृशतामुपगतौ तदपि ममासक्तिकारणादेव संभूतमि'ति। इयं नायिका देवकोपाद्भीता स्वकामरोगात् वियोगदुःखाच्च जाताः ये विकाराः ते स्वप्रेम्णः संजाताः न तस्य कैतवादिति देवं भणति। प्रतिज्ञाभ्रंशकृतं धवमपि देवक्रोधाद्रक्षितुमेव यतते इयं पतिव्रता। पर्वतविभागे। शार्दूलविक्रीडितं वृत्तम्।

**63. The girl prays to the gods :**

We hear it said that the awesome gods
That inhabit the tree in the square
Punish the wicked : by no means wicked
Is my chief of hilly domains.
Me? – my forehead has developed a pallor
My shoulders have weakened and the armbands loosened
Only because of the love I bear
To him : he is innocent, wholly blameless!

(Kuruntokai 87)

64. यस्याद्रौ सितनिर्झरः प्रपतने शब्दायते दूरतः
मुख्योऽसौ तव संगमेप्सुरटवीं क्रान्त्वा प्रियो दुस्तराम्।
रात्रौ यत्र वनाध्वनि क्षितबलो व्याघ्रेण युध्यन्गजः
आगच्छेन्न हि लज्जिताः सखि वयं स्यामैव तच्छिद्रतः ॥88॥

सखी नायिकां वक्ति। 'गिरिमुख्योऽसौ वल्लभः यदि रात्रिसंकेतमनुसृत्य दुस्तरामटवीं क्रान्त्वागच्छेदिह तर्हि तस्मादुत्थितायाः किंवदन्त्याः न वयं लज्जिताः स्यामे'ति। गिरौ निर्झरस्य शब्दः दूराच्छ्रोतव्यः किंवदन्त्याः सूचकः। तृतीयपादे काननस्य भयङ्करत्वं वर्णितम्। वल्लभे आगत्य गुल्मेषु तिरोभूते सत्येव सख्याः एतद्भाषणमित्यूह्यते। विवाहप्रयत्नेऽश्रद्दधानः प्रतिरात्रि भयानककाननमार्गेण वल्लभः आगच्छतीति यत् तत् नायक्याः दुःखप्रदमिति तस्मै सूचयति सखी। पर्वतविभागे। शार्दूलविक्रीडितं वृत्तम्।

**64. The friend to the girl :**

The chief of vaulting hills resounding
With the mighty roar of frothing cascades
May come of nights in nightly trysts,
Walking the wooded mountain slope
Where the slit-eyed elephant taking on
The powerful tiger weakens, losing
Its former might. We are not, dearest
The least abashed at the village scandals
That may arise from such meetings!

(Kuruntokai 88)

65. रूपश्रियः स्त्रैणगुणस्य नाशे प्राणप्रयाणेऽपि न वाच्यमेतद्।
पतिर्मदम्बा च पिता च भूतः प्रेमक्षये कः कलहेन लाभः ॥93॥

नायिका सखीं वक्ति। वारस्त्रीसख्ये नितरां व्यापृतः नायकः गृहमागत्य प्रवेशार्थमनुमतिं सखीद्वारा याचते। 'अनुमतिर्देया, स तव पतिरिति' वदन्तीं सखीमेवं भणति नायिका। 'त्वया यदुक्तं स मे पतिरिति तन्न वाच्यम्। स मद्विषये पतित्वेन नाचरितवान्। स मे माता स्यात् पिता स्यात् मया वन्दनीयोऽपि स्यात्। परं तु स मे पतिर्नैव। एवमुक्तवत्याः मे अनेन स्त्रैणत्वनाशो वा प्राणनाशो वा भवतु परं तु तं मे पतिं नाङ्गीकरिष्यामि। प्रेमकलह इत्यपि कांचिद्वार्तां त्वत्तः अशृणवम्। प्रेमकलहः प्रेमिणोरेव स्यात् भवेत्। प्रेमनाशे को वा लाभः स्यात्प्रेमकलहेने'ति। चतुर्थपादः कामशास्त्रे महावाक्येष्वेको मन्तव्यः। नदीतीरविभागे। उपजातिः वृत्तम्।

**65. The girl to her friend :**

Even if it means the total loss
Of my beauty, my feminine graces,
Do not plead to let him in
Do not use the appellation
Of husband when you refer to him.
He may be revered as my father
Even as my mother, dear;
But he is no more my husband, my lord
And, where there is no bond of love
Where is the question of a lover's tiff?

(The husband had strayed and now, repentant, seeks readmission to the house. Even the usually critical friend of the girl recommends acceptance of his plea. But the girl has suffered and she rightly regards him as anything other than her husband. When the friend dismisses the unpleasantness between them as a lovers' tiff, the girl spiritedly retorts that where there is no love, there can be no lovers' tiff.)

(Kuruntokai 93)

66. धवलजलनिपातः पुष्पितेष्वश्मखण्डेष्वनुरसति नितान्तं यत्र तस्मिन् महीध्रे।
गिरिचरदुहितेयं स्कन्धपुष्टा सखे माम् अशमयदनलाभं नीरभावा समग्रम् ॥95॥

कामी सखायं वक्ति। यत्र यस्मिन् गिरौ अश्मखण्डेषु सम्यक् पुष्पितेषु धवलवर्णः जलपातः पतन् अनुरसति नितान्तं तस्मिन् महीध्रे पर्वते तत्र वसन्ती काचन स्कन्धपुष्टा कन्या जलस्वभावा अग्निस्वभावं मामशमयत्। अनेनैव कारणेन यथा त्वया दृष्टोऽहं पूर्वं वीरः भूत्वा अधुना कातरः भवन् दुःखं असहिष्णुरस्मि इति। पर्वतविभागे। मालिनीवृत्तम्।

**66. The young man to his friend :**

You are right, you do not err
In attributing my weakness of mind
To my love for the comely daughter
Of hunterfolk on the mountain slope.
Tis true I was fiery, I could rage
Undaunted in the fields of battle
Before I met her. But she came
As the gentle rain, the doe-eyed maiden
And presto! in a few fate-filled moments
Put out my raging inner fires!

(Kuruntokai 95)

67. यत्राम्बुपातनिकटे तरवो रुहन्ति कुर्मः किमस्य विषयेऽद्रिपतेरिति त्वम् ।
पृच्छस्यहं प्रहसनार्थवचस्तवेति नाङ्गीकरोमि यदि ते किमुतालि तस्मात् ॥96॥

नायिका सखीं वक्ति। 'अद्रिपतिर्वल्लभो नायातः स्वनिर्दिष्टे काले। किं वा कुर्मः अस्य विषये? अनृतवादिनं तं कथं वा दण्डयावः' इति पृच्छसि। इदं हास्यवच इत्येवाङ्गीकरोमि। अथवा मम प्रियतमं दूषयन्तीं त्वां निष्करुणं दण्डयामि। तस्मादस्य खण्डनाद्विरमे'ति। पर्वतविभागे। वसन्ततिलका वृत्तम्।

**67. The irate girl to the friend who had just criticised the boy for his failure to take energetic steps to consummate the wedding :**

You come and say
"I wonder what
We can really do
In respect of
The chief of the hill
Where vengai trees
Grow beside
The waterfalls!"
If I didn't
Dismiss this
As badinage,
Contemplate
What harm would happen
To you, my dear!

(Kuruntokai 96)

68. अत्रास्म्यहं स्त्रैणगुणो निलीनः तीरे निकुञ्जे जलधेः सशोकः।
मुख्योऽयमास्ते स्वपुरे प्रवृत्तिः गुह्या प्रसिद्धा परिषद्गतास्ते ॥97॥

नायिका सखीं वक्ति। 'अहमत्रास्मि भवने। मम प्रशस्तः स्त्रैणगुणः जलधेस्तीरे सशोकः निलीनः, यत्र वल्लभेन मम संगमो जातः। एष वल्लभस्तु स्वपुरे सुखमास्ते मामनादृत्य। आवयोः संगममुद्दिश्य या प्रवृत्तिः सा पुरा गुह्यासीत्, परं त्वद्य सर्वैर्विज्ञाता ग्रामपरिषद्गतास्ते'। इति। समुद्रतीरविभागे। इन्द्रवज्रा वृत्तम्।

**68. The girl to the friend :**

I am a fixture in this house, my graces
Are there to be found in the seashore bower, warped.
The chief remains unmoving in his town.
The secret goings-on have blossomed now
Into calumny that constitutes the topic
Of discussion in the village meeting place!

(Kuruntokai 97)

69. लावूस्फुटं जललवस्फुरदत्र वाट्यां वर्षप्रवर्धितसुमं पुरतः प्रसार्य।
एतत्सवर्णमुत मुख्य ललाटमस्या इत्येव वाचयितुमालि न कोऽपि लब्धः ॥98॥

कामिनी सखीं ब्रूते। वर्षाकाले प्रत्यागमिष्यामीति तामुक्त्वा गतः प्रणयी नायातः, वर्षाकालस्त्वागतः। नितरां दुःखिता कामिनी एवं वक्ति। 'वर्षप्रवर्धितं आलाबुपुष्पं अस्मदगृहवाट्याः गृहीत्वा कश्चन तस्य कामिनः सकाशं गत्वां तव प्रियायाः सुन्दरं ललाटं अस्य पुष्पस्य श्वेतवर्णमुपगतम् अप्रसन्नत्वात् तवेति यदि ब्रूयात्तर्हि तत्साधु स्या'दिति। 'कामिन्याः ललाटं विरहात्सितवर्णमुपागतमिति न केवलं, परं तु पुष्पमिदं वर्षाकाल एव विकसति, अस्मिन् पुष्पिते वर्षतौ चागते त्वं किं चिरायते?' इत्यपि प्रष्टव्यमिति भावः। गोप्रचारविभागे। वसन्ततिलकावृत्तम्।

**69. The girl to the friend :**

The piram plant that has been nourished
By copious rains in the rainy season
Has now come out with prolific blossom —
The plant that grows in the side of the house
In the midst of the bushes that ooze water.
How nice it would turn out to be
If we can find a person to take
Some of the piram blooms to him
And tell him, "Chieftain, the handsome forehead
Of the girl you love has come to be
Pallid, white like the flowers I've brought!"

(Kuruntokai 98)

70. तरोः शाखास्पर्शक्षमजलरयः प्रस्रवणतो
भवत्यल्पस्रोताः अपि मम मनस्युच्छ्रितगदः।
क्षयं यायाद्योगादिति गृहसमावर्तनमनाः
विरुद्धा लोकस्य प्रकृतिरनया भ्रान्तहृदहम् ॥99॥

प्रवासानन्तरं गृहं निवृत्तः नायकः सखीं वक्ति। 'तां प्रवासे क्षणमपि त्वमचिन्तयो वा' इति किंचिदिव सक्रोधं सखी पृच्छति चिरायितं वल्लभम्। उत्तरं ददानः सः 'प्रतिक्षणं तच्चिन्त एवाहमभवम्। अतिवेगात् स्रवत् नदीजलं वर्षपुष्टं कालेनाल्पस्रोतः भवति। तेनैव प्रकारेण मम मनसि कामाख्यगदः अत्युच्छ्रितत्वं गतः तमल्पस्रोतसं कर्तुम् अत्र प्रतिनिवर्तितुमेवाहमभ्यलषम्। परं तु धनार्थं प्रवासं गतः धनेन विना रिक्तहस्तेन गृहमायातः इति लोकगर्हणाद्भीतः भ्रान्तहृदयश्च भूत्वा धनसंचयं कृत्वैव प्रत्यागतोऽहमि'ति। गोप्रचारविभागे। शिखरिणी वृत्तम्।

**70. The boy to the friend of the girl who asked him on his return if he had ever thought of the girl :**

**The river in floods
May run so high
The foaming waters
May touch the branches
Of the trees on the bank;
But when the floods
Go down, subside,
The water in the river
May run so low
One who is thirsty
Has to lap up the water
With his hands.
I desired deeply
To bring down my illness
Induced by the parting
From the level of the floods
To the vanishing point
By returning home
Before completing
The job undertaken.
I thought deeply,
Pondered over
The consequences,
My heart-ache urging
My return forthwith.
I fought it back
And stayed to finish
The job undertaken
Only rememb'ring
The way the world
Will regard my deed,
This forsaking
The job in the middle.**

**(Kuruntokai 99)**

71. भूमिः संवलिता महोर्मिनिनदद्रत्नाकरेणाभितः
स्वर्गो निर्जरवर्तनं सुमहितो नृणां परो दुर्गमः ।
एतौ तावधिरोहतो न हि तुलामालिङ्गनादंसयो-
र्यो हर्षो ह्यमुना सुवर्णवपुषः पुष्पेक्षणाया मम ॥101॥

नायकस्य आत्मगतम् । धनसंचयार्थं प्रवासं गच्छेति चोदयत् स्वचित्तमेवमुक्त्वा प्रयाणचिन्तां जहाति । 'समुद्रसंवलिता भूमिः, देवानां वासस्थानं यः स्वर्गः सर्वैर्महितः एतौ एतस्याः मे वध्वाः आलिङ्गनात्संभूतहर्षेण न समौ' इति । भूम्या आधिपत्यं स्वर्गवास इति उभौ महानन्दं प्रयच्छतः । परं कामिन्यालिङ्गनसुखमेताभ्यामुत्कृष्ट-तरमिति प्रेमपराकाष्ठायां वर्तमानश्चिन्तयति । पर्वतविभागे । शार्दूलविक्रीडितं वृत्तम् ।

**71. The boy to himself :**

This wide earth with ocean-borders
The heavens, the home of divine beings
So hard to enter — both these are
Insubstantial when weighed against
The days of joy that I derive
From embracing this comely girl
With flower-like eyes and golden skin!

(He says this to quiet his ambitious mind which prompts him to start on a journey to accumulate wealth)

(Kuruntokai 101)

72. अनुध्यायन्त्या मे हृदयमनुरागः प्रतपति
क्षमाहं विस्मर्तुं सखि न यतमाना क्षणमपि।
नभस्पृक् कामो मे प्रणयिनि विवृद्धो व्यथयति
मया बद्धस्नेहो नियतमनुदारोऽनृतवचाः ॥102॥

कन्योक्तिः सखीं प्रति। सुगमोऽर्थः। अत्र कामस्य स्मरणं दुःखप्रदं कामिनः अनादरत्वात्, परं तु कान्तस्य क्षणमपि विस्मरणमसाध्यमेव। तस्मात् सर्वथा दुःखजनयितैव कामः। समुद्रतीरविभागे। शिखरिणी वृत्तम्।

**72. The girl to the friend :**

If I brood long over my love
My heart is seared with burning anguish.
If you counsel me to stop
Brooding, dear, that's beyond my powers.
My heart's love, grieving soars to the heavens :
The one on whom that's centred so
Is surely not of a noble mien!

(Kuruntokai 102)

73. मुक्ता इव त्रुटितसूत्रसरात्तुषाराः सिञ्चन्त्यधश्चरति धेनुगणे यदालि।
प्रातर्वियुज्य दयितां शिशिरे प्रयातः दूरे चिरायति गृहं न निवर्तते च ॥104॥

नायिका सखीं वक्ति। 'त्रुटितमुक्तासरात् यथा मुक्ताः पतेयुस्तथैव तुषार-शीकराः गोप्रचारे धेनुगणे चरति सति अधः पतन्ति। एतस्मिन्शिशिरे प्रातःकाले धवः दयितां मां वियुज्य गतः। यस्मिन् समये वियुक्ता अपि संगच्छन्ते तस्मिन् समये मां विहाय प्रवासं गतः। दूरे चिरायति गृहं शीघ्रं न निवर्तते चे'ति। गोप्रचारविभागे। वसन्ततिलका वृत्तम्।

**73. The girl to the friend :**

He left me, dear, when dew drops scatter
Like pearls from a string that has been cut,
When herds of cattle in the meadow graze,
He left me early in the morning
In dreary winter, nor does he seem
Inclined to hurry home to me,
And no end to my lonely days!

(Kuruntokai 104)

74. अद्रौ वर्धितधान्यराशिषु गिरिक्षेत्रिप्रदत्तं सखि
देवायेति समृद्धगुच्छमनघं जग्ध्वाविजानन् शिखी।
पूजारिण्युपमं सवेपथुरभूत्कान्तस्य तुङ्गे गिरौ
सख्यं येन कृतं सदुःखमधुना स्मर्तव्यमश्रुस्रवैः ॥105॥

कामिनी सखीं वक्ति। 'वल्लभः विवाहकृते न कंचिदपि प्रयत्नं करोति। तस्मान्मे व्यथा वर्धते। तस्याद्रौ क्षेत्री देवाय निवेदनरूपेण यं धान्यगुच्छं मन्दिरे निवेशितवान् तमज्ञानतः खादित्वा कश्चन शिखी पूजारिणी यथा देवावेशात् वेपते तथा सवेपथुरस्ति। तथैवाहमपि प्रथमं मिष्टमिति विचिन्त्य तेन सख्यं कृत्वाधुना दुःखिनी। एतत्सख्यं बाष्पस्रवेणैवाद्य स्मर्तव्यमस्ती'ति। पर्वतविभागे। शार्दूलविक्रीडितं वृत्तम्।

**74. The girl to the friend :**

On his hills, a peacock, finding
A sheaf of grain (offered by
A farmer to the gods, out of his harvest)
Gobbles it up without knowing
And develops a tremor on that account,
Even as a priestess, possessed, trembles.
Dearest friend, the love I bear
To the lord of the hills that was pleasant at the start
Now makes me shed tears of anguish
Whenever remembered.

(Kuruntokai 105)

75. मूलं तरोरश्मसु वर्धमानं द्रष्टुः सितं नीरनिपाततुल्यम्।
यस्मिंस्तदद्रेः प्रमुखस्य वाक्यं निर्दोषचित्तादुदितं श्रितं नः ॥

उद्वाहकालादपरिक्षयेण स्थिरानुरागा वयमित्यमुष्मै।
प्रेष्यं धवायोत्तरमेतदालि धृते हुते वह्निशिखा यथैव ॥106॥

नायिका नायकस्य दूतवाक्यं निशम्य सखीं वक्ति। 'वल्लभो निर्दोषचित्तः पूर्ववत् सानुराग इत्यात्मानं शंसति। तस्मै उत्तरं झटिति देयमस्माभिः, घृते होमाग्नौ हुते वह्नेः शिखा यथायाति। वयमुद्वाहकाले यथा तथैवाधुनापि सानुरागाः, अस्मासु न कोऽपि भेदः समुत्पन्न इति तस्मै दूतवाक्यं प्रेषयाम' इति। नायकः पण्यस्त्रीसख्यं कृत्वा कंचित्कालं गृहं नागतः। मम दुर्वृत्तं क्षमस्वे'ति दूतद्वारा प्रार्थितं तेन। तस्य दुर्वृत्तक्षमापणद्वारा झटिति प्रेष्यमुत्तरमिति वक्ति सखी। नदीतीरविभागे। प्रथमपद्यस्येन्द्रवज्रा, द्वितीयस्योपजातिः।

**75. The girl to the friend :**

The faultess inner heart's message
Has reached us, dear, the message from
The chieftain of the hill where the tough coarse root
Of the itri tree bursting through
The clefts in the rock look much like a cascade,
Hurtling down the slope of the mountain.
His message has come. Let us reply,
With the sharp reaction of the flame of fire
When an oblation is dropped into it,
That "We are in the same mental frame
We were in at the time of the wedding.
We are the same, we haven't changed!"

(From the liaison with prostitutes, the boy sends his wife a message saying he is still fond of her and wants to be received back. This is the reaction of the loyal wife.)

(Kuruntokai 106)

76. अद्रावम्बुमुचां गणो विहरति प्रावृट्प्रवृद्धः सखि
स्मृत्वा गेहमुखं चरन्ति दयिताः वत्सान्निजान्धेनवः ।
क्षेत्रे गोचरणे हरिद्रदलवती जातीलता कुड्मलैः
रक्तव्योमनिभप्रकाशमयते जीवामि नेतः परम् ॥108॥

नायिका सखीं वक्ति। 'अद्रौ जलदाः वर्षन्ति। धेनवः दयिताः निजवत्सान् स्मृत्वा गेहमुख्यश्चरन्ति। गोप्रचारक्षेत्रे जातीलता हरिद्रदलवती कुड्मलैर्मुकुलै रक्तवर्णैः सायंकालव्योमवत् द्योतते। धवो नायाति। इतः परं न जीवामि' इति। गोप्रचारविभागस्य सर्वाणि लक्षणानि पद्येऽस्मिन् वर्णितानि। शार्दूलविक्रीडितं वृत्तम्।

**76. The girl to her friend :**

Rain clouds frisk at the top of the hill,
In the hamlet, at the foot of the hill, the cattle
Out for grazing, now wend their way
Homewards, filled with thoughts of their calves.
The faultless jati blooms in the meadow
Reminding one of the evening skies.
I cannot, dear, hold on to life
Much longer, now; I know I'm finished.

(Kuruntokai 108)

77. आनीय मत्स्यनिवहं सखि नम्रपृष्ठं तीरे क्षिपन्ति जलधेः पृथुवीचिवाहाः।
सानुग्रहे त्वयि धवेऽपि दयार्हमेतन्निन्द्यं जनैर्भवति सुन्दरि यल्ललाटम् ॥109॥

नायके गुल्मेषु तिरोभूते सखी नायिकां वक्ति। 'हे सखि नम्रपृष्ठं मत्स्यनिवहं पृथुवीचिवाहाः जलधेः आनीय तीरे क्षिपन्ति। तस्य देशस्य मुख्ये त्वयि सानुग्रहे सत्यपि मध्ये मध्ये संभावितवियोगहेतोः तव ललाटं पाण्डुरतां गतं जनैर्निन्द्यं स्नेहवतां दयार्हं च भवति। विवाहानन्तरमेवैतत्पाण्डुरत्वं विनीयते। परं तु विवाहोद्दिष्टयत्नान् धवः नैव करोति। इदमेव शोचनीयमि'ति। समुद्रतीरविभागे। वसन्ततिलका वृत्तम्।

**77. The friend of the girl speaks :**

Your lord, dearest, is the ruler of hamlets
On the shore of the sea, where, even the tide
That is ebbing away yields shoals of shrimp
With curved backs and thorn-like feet
It hasn't missed my observant eye
That your forehead that is comely, shining
Loses its splendour not only when
The lord of your heart stays away from you,
But even during those magic moments
When he is with you, making love.

(Kuruntokai 109)

(The lover has come to the tryst and remains concealed. Pretending not to have noticed his arrival, the friend tells the girl how, during the prolonged courting, the girl is always filled with anxiety : this is to urge the lover to speed up the wedding.)

78. नायाति वायाति स चेत्स कः स्यादस्माकमेवं पवनस्तुषारः।
विकासयन्नीलसुमं ह्रदेषु मयूरपिञ्छाक्षिसमानवर्णम् ॥
संमर्दयन्श्यामसुमं च गुल्मेष्वीङ्गालताफुल्लसुमानि भूमौ।
निपातयन्कोमललोमवन्ति हिनस्ति मामेष धवस्त्वचिन्तः ॥110॥

नायिका सखीं वक्ति। 'स अधुना यदि नायात्यायाति वा गृहं तर्हि को वा भेदः। स को वास्माकं, केन वा बन्धेन बद्धः। (न केनापीत्यर्थः) तुषारः पवनः ह्रदेषु नीलोत्पलं विकचीकृत्य मयूरपिञ्छाक्षिसमानवर्णं, गुल्मेषु श्यामरङ्गं कुसुमं संमर्दयन्, इङ्गालताकुसुमानि भुवि निपातयन् मां हिनस्ति। परं तु धवः मां प्रति वीतचिन्त आस्ते दूरदेश' इति। प्रवासं गतः वल्लभः नोद्दिष्टवदायाति, वियोगात्परं व्यथितायाः कामिन्याः विषये निर्घृण इति कारणात् नितरां क्रुद्धैवं वदति नायिका गोप्रचारविभागे। उपजातिः वृत्तम्।

**78. The girl to her friend :**

The cold wind from the north
Opens the buds of the neelam
And shakes the karuvilai bloom
That looks like the eye of the feather
Of peacocks; the wind blows on
To shake down the eengai blossom
Small and tender from
The plant with slender thorns.
The north wind, bitter, cold
Blows on making me
Suffer endless misery
Since he cares so little
How I am faring, dear,
What is he to me?
Whether he comes or not
How does that matter to me?

(Kuruntokai 110)

79. बिभेम्यहं विस्तृतकिंवदन्त्याः ययालि कामः क्लमतामुपैति।
कामं त्यजेयं यदि वाच्यभीतेः लज्जैव शिष्टा मयि केवला स्यात् ॥

मतङ्गजेनेव विभिन्नशाखा त्वचा समेता न भुवं स्पृशन्ती।
स्त्रैणप्रभावं दयितेन भुक्तशेषं प्रपश्येह मयि प्रियालि ॥112॥

नायिका सखीं वक्ति। 'यद्यहं किंवदन्त्याः भीता सती तस्य चिन्तनमपि न कुर्यां, तर्हि कामः अपचयं भजते। यदि कामं पूर्णतस्त्यजेयं केवला लज्जैवावशिष्टा स्यात्। गजेन विभिन्नशाखा भुवं स्पृशन्ती त्वचा संवन्धेनैव तरुणा संबद्धा (तरोः न समग्रं विभिन्ना) यथा स्यात् तथैवाहं स्त्रैणशेषास्मि। इदं पश्ये'ति। अस्याः स्त्रैणं प्रायशः भुक्तं वल्लभेन, परं त्वीषच्छिष्टं भवति तस्यां त्वचैव तरुणा संबद्धा शाखेव। तद्यथा न विनश्येत् तथा झटिति तेन पुनरागन्तव्यमिति भावः। पर्वतविभागे। उपजातिः वृत्तम्।

**79. The girl to her friend :**

If I fear the scandal
My love shall fade away.
If I forsake my love
To stop the calumny
What's left with me
Is only my bashfulness.
Look, dear, like the branch
Broken by an elephant,
Standing at an angle
Not touching the ground below,
With the fibrous bark showing
Are my feminine graces
Devoured by the chieftain!

(Kuruntokai 112)

80. ग्रामस्यारात्तडागोऽस्ति तडागोपान्ततः स्रुतिः।
तत्तीरे वर्तते कुञ्जः विविक्तः सर्वदाग्रिम ॥
विना श्वेताम्बकान्यत्र न कश्चिदपि दृश्यते।
स्रुतिं केशमृदर्थाय यामः सापि सहैष्यति ॥113॥

सखी नायकं वक्ति। अयं संभवः प्रेमारम्भे। 'कुत्र वावयोः संगमः स्यादि'ति पृच्छसि। अस्य ग्रामस्यारात् तडागः, तत्समीपे किंचित्स्रोतः। स्रोतसो वयं केशशुद्धीकरणार्थं मृदः ग्रहणाय गमिष्यामः, सापि सहैवायास्यति। तन्निकटे कश्चित् विविक्तः कुञ्जोऽप्यस्ति यत्र श्वेतबकान् दिना न कोऽपि आयाति' इति। पर्वतविभागे। 'विविक्ते कुञ्जे युवयोः संगमो भवेदि'ति सूचयति सखी। वृत्तमानुष्टुपम्।

**80. The friend to the boy at an early stage of the romance :**

The pool adjoins the village; the brook,
Isn't far, too, from the village pool.
Right on the bank of the river stands
A leafy bower where the only callers
Are the cranes that forage for fish in the brook.
We visit the brook to gather the earth
With which we wash our flowing tresses :
This guileless girl too comes along
To the bank of the brook, in our company.

(Kuruntokai 113)

81. मत्पुत्रिकां जलनिधेर्विनिवेश्य पारे
वाचानुसारमिह तामनयं प्रमुख्य।
काले प्रियां गमय यामि बका गृहीत-
मत्स्याः सुतां पदतलेन निपीडयेयुः ॥114॥

संकेतानुसारं नायिका समुद्रतीरे निकुञ्जे निलीनस्य नायकस्य हस्ते दत्त्वा सखी वक्ति। 'मम क्रीडार्थपुत्रिकां जलधितीरे सैकते निवेश्य वार्तानुसारमिमामानीयागताहं। उचिते काले तां गृहाय गमय। मया तु न शक्यमत्र स्थातुम्। बकाः मत्स्यान् भक्षयित्वा प्रमत्ताः मम पुत्रिकां सैकतस्थां मर्दयेयुरिति। प्रेमसङ्गे तृतीयस्य न प्रवेश उचितः। सखी नितान्तं साहाय्यकृदपि प्रेमिणोर्योगसमये तत्र न स्थातव्यमिति धर्ममनुसृत्य 'मम क्रीडाप्रतिमां बकाः निपीडयेयुरि'ति व्याजेन गन्तुमुद्यता। प्रेमधर्मसौकुमार्यमत्र विवक्षितम्। समुद्रतीरविभागे। वसन्ततिलका वृत्तम्।

**81. The friend of the girl to the young man :**

Leaving my doll on the sandy shore
I have brought her here, as we planned
Chief of seashore hamlets, now
sport with her but note this well,
She should go home before it's late!
Me, I cannot tarry longer
For I am worried that the crane replete
With aral fish may trod on my doll
And crush her face!

(Kuruntokai 114)

82. वर्षार्द्रपुष्पनिभसारसदर्शनेन
भीतो जलार्द्रकटकस्त्वरते प्रवेष्टुम्।
गुल्मस्य मूलपटले बिलमात्मखातं
भित्त्वा स्वदामनियतिं वृषभो यथैव ॥

देशे धवस्य किल यस्य मम प्रियालि
नायात्वसावटनतो नगरान्तरेषु।
उद्दिश्य तं शुचमिमां त्यज पण्यवीथ्यां
लभ्यानि हस्तवलयान्यवृहन्त्ययत्नात् ॥117॥

सखी नायिकां वक्ति। 'यथा कटकः सारसदर्शनाद्भीतः स्वबिलं प्रविश्य निर्भय आस्ते तथैव युवयो रहस्यसंगमजातकिंवदन्त्याः भीतः नायकः त्वं परिणयतु। विवाहपर्यन्तं वियोगसंजातकार्श्यं यथा नगरनार्यः न पश्यन्ति तथा त्वं अबृहन्ति वलयानि कृशहस्तसमुचितानि सुलभानि पण्यवीथ्यां तानि धारये'ति। सा क्रोधाद्वक्ति 'नगरान्तरेषु अटनात् स नायातु गृहं, तस्मिन् चिरायितेऽपि त्वद्दुःखं इमाः स्त्रियः नावगच्छन्तु किंवदन्तीं मा परिसारयन्तु नगर' इति। समुद्रतीरविभागे। वसन्ततिलका वृत्तम्।

**82. The friend to the girl :**

Fleeing from the hungry stare
Of a crane that looks like an ambal blossom
The crab slithers fast into its hole
In the midst of a system of kandal roots,
Rather like a bull that has freed itself
From the tether of the cowherds. The chief of the shorelands
May not turn up; let him please himself :
Bangles of a size that will fit your wrists,
Smaller bangles too are sold
In the shops in the town, to meet your needs.

(This is refernce to the emaciated state of the girl's hands, a state brought on by the dilatory tactics of the boy)

(Kuruntokai 117)

83. अस्तं याते परुषकिरणे विस्तृते चान्धकारे
शोकाक्रान्ते द्विजपशुगणे प्रेयसो विप्रयोगात्।
भो भो यूयं प्रविशत गृहं स्वैरमागन्तुकामाः
इत्युद्घुश्टे गृहभटगणैर्नोपयातः प्रियो मे ॥118॥

कामिनीवचनम्। सायंकालः सर्वेषां मोदकरः यदि प्रेयसां संयोगो भवति। द्विजाः पक्षिणः पशवश्च प्रियान् बहिर्गतान् प्रतीक्षमाणा महद्दुःखमनुभवन्ति, प्रियागमने मुदिताश्च भवन्ति। कामिन्याः वल्लभः प्रवासं गतः उद्दिष्टे दिने नायातः। तस्याः पिता धनिकः वदान्यश्च। तस्य भटाः सायंकाले बहिः स्थितान् सर्वान् अर्थिनः आहूय 'अन्तः प्रविशत स्वैरं, यदर्थयन्ते भवन्तः तत्सर्वमत्र लभ्य' मित्येवोद्घोषयन्ति। कन्या वक्ति सशोकम्' एवं भटैरुद्घुष्टे सत्यपि सः नागच्छति, इतरे बहवः गृहं प्रतिदिनं प्रविशन्त्येवे'ति। गोप्रचारविभागे। मन्दाक्रान्ता वृत्तम्।

**83. The girl to the friend :**

Birds and beasts around
Stay up in loneliness,
Await for absent mates
In the unkind even fall.
Servants getting ready
To close the frontal door
Cry out, "Is there any
Desiring to enter?"
Before they bolt the door
Others troop in, dear,
But not the one we love!

(Kuruntokai 118)

84. वन्यं गजं सर्पशिशुः सितत्वक् यथा सरेखो व्यथयेत् सुदृश्यः।
तथैव मामल्पवया हिनस्ति सकंकणोद्भिन्नलदन्तकान्तिः ॥119॥

नायकः सखायं वक्ति। 'यथा सर्पशिशुः विषदन्तविहीनः सुदृश्यः रूपेण महान्तं महाबलं गजं व्यथयेत् तथा मामियं बालिकाबला हिनस्ति। सा तु सकंकणा नलस्य जलेरुहस्योद्भिदिव दन्तकान्तिर्यस्याः।' इति। पर्वतविभागे। उपजातिः वृत्तम्।

('एषा सुन्दरी बाला मम हृदयंगता। प्रतिदिनसंभूतवियोगमपि मया सोढुमशक्यं भवति। तस्मात् ममैषा दुःखप्रदा सर्पशिशुर्यथा गजस्ये'ति नायकस्याभिप्रायः)

**84. The young man to his friend :**

Some times the young one,
Of a small white serpent
With stripes on its body,
Can trouble an elephant,
A tusker of the woods.
In like manner, now
This slip of a girl
With sharp white teeth
And bangled hands
Is tormenting me!

(Kuruntokai 119)

85. अकिञ्चनः कामयते सुखं यथा तथैव मे वाञ्छसि चित्त दुर्लभम्।
विशिष्टभावामवगच्छसि प्रियां परं दुरापां नितरां न बोधसि ॥120॥

नायक आत्मगतम्। 'दरिद्रः यथा सुखं दुखापं कामयते तथैव, मे चित्त! त्वं दुर्लभं वस्तु कामयसे। तां प्रियतमां त्वं विशिष्टभावां सौन्दर्यगुणादियुक्तां अवगच्छसि परं तु तां नितरां दुरापां न जानासि। एतस्मादेव हेतोस्तव शोकोऽधुने'ति। संकेतानुसारेण गतः प्रियां निर्दिष्टस्थानेऽपश्यन् चिरप्रतीक्षाया अनन्तरमात्मानं गर्हयति नायकः। पर्वतविभागे। वंशस्थं वृत्तम्।

**85. The young man to himself :**

**Like a man without means**
**Aspiring to the pleasures**
**You desire the girl,**
**O mind of mine!**
**You know her to be good,**
**But you seem unaware**
**That she is hard to get!**

**(Kuruntokai 120)**

86. यद्वक्षि तद्वा सखि सत्यमद्रौ श्यामाननः कोऽपि कपिर्विधावन्।
शाखाबलं चागणयन्प्रमादात् स ग्रस्तशाखो निपपात भूमौ ॥
तथैव संकेतमशक्नुवानः संरक्षितुं यं कुरुते प्रमादम्
धवस्तदुत्पन्नवियोगहेतोः पाण्डुत्वभाग् मद्भुजयुग्ममद्य ॥121॥

नायिका सखीं वक्ति। 'श्याममुखः कोऽपि कपिः शाखायाः बलमविगणयन् प्रमादात् शाखामल्पबलां गृहीत्वा तस्यां भिन्नायां शाखासहितं भुवि पपात। तद्वत् धवस्य संकेतरक्षणेऽशक्तस्य प्रमादात् मम भुजयुग्मं पाण्डुत्वं भजते वियोगहेतोः प्रतीक्षाभिन्नत्वादि'ति। पर्वतविभागे। संकेतस्य वैशद्यहैन्यात् धवो यत्रातिष्ठत् तां प्रतीक्ष्य, सा तत्र न गता, सा तु स्थानान्तरे धवस्य प्रतीक्षां कुर्वती आसीत्। चिरप्रतीक्षाया अनन्तरं, 'धवः स्थानान्तरे स्थित्वा भग्नाशः गृहमगादि'ति सखीमुखात् श्रुत्वैवं वदति नायिका। प्रथमस्येन्द्रवज्रा, द्वितीयस्योपजातिः।

**86. The girl to her friend :**

Is that true what you narrate?
A monkey leaping in his hill
From tree to tree misjudged the strength
Of a hanging branch and went down to earth
With the broken twig. In like manner,
The chieftain bungles, commits an error
In fixing the tryst and fails to turn up
Where I wait in love-lorn grief
And what's the result? He doesn't suffer
But it is my shoulders, delicate, fair
That, struck by anguish turn a pallid hue.

(Kuruntokai 121)

87. अश्लक्ष्णमम्बुनि सुमं विकचं तडागे कह्लस्य पृष्ठमिव तन्मुकुलं प्रवृत्तम्।
सन्ध्यागता ह्यवसिते दिवसे पुनः सा नैकाकिनी परमुपेतविभावरीयम् ॥122॥

नायिकात्मगतम्। 'तडागे अम्बुनि कह्लस्य बकस्य अश्लक्ष्णममसृणं पृष्ठमिव जलकुसुमं मुकुलीभूतम्। दिनावसाने सन्ध्यागता। सन्ध्याकालो वियोगिनां दुःखप्रद इति सर्वैरेव ज्ञातम्। धृत्या यदि तं कालं श्रमेण तरेयं, तर्हि अपि मम दुःखं नावसितम्। सन्ध्या नैकाकिनी, परं तु पश्चात् विभावरी तस्या अनुसारिणी नितरां दुःखप्रदा तिष्ठति, किं वा करोमी'ति। समुद्रतीरविभागे। वसन्ततिलका वृत्तम्।

**87. The girl to herself :**

Like the coarse hard back
Of a crane, the blossom
That opened in the pond
Now closes its petals.
It's evening now
May it prosper :
But it isn't alone,
It's followed by
The lone, black night!

(During separation the evening is hard to pass but the night, the sleepless silent night can be truly terrible to a love-lorn lady.)

(Kuruntokai 122)

88. राशीभूता कौमुदी सैकतं नु ध्वान्तं गाढं पुञ्जितं तस्य कोणे।
शीतच्छायाकुञ्जमेकान्तमत्र श्यामाङ्गानां पुष्पितानां द्रुमाणाम्।

वल्लभो मे त्वनायातः भ्रातॄणां मे प्लवाः पुनः।
शीघ्रं प्रतिनिवर्तन्ते मत्स्यग्रहणकर्मणः ॥123॥

नायके तिरोभूते तद्विजानती सखी नायिकां वक्ति। श्यामाङ्गानां श्यामरङ्गशाखावतानाम्। 'संयोगोचिताः सर्वाः सामग्र्यः अत्र सन्ति। परंतु नायको नायातः संकेतानुसारम्। यदि शीघ्रमायाति तत्साधु भवेत्। अस्मदीयाः पितृभ्रात्रादिबान्धवाः मत्स्यान्गृहीत्वा शीघ्रमेव प्रतिनिवर्तन्ते। तेषामागमनात्पूर्वमेव धवेन स्वपुरं गन्तव्यमस्ती'ति। संघकालशृङ्गारग्रन्थेषु सखी 'मे वल्लभ' इत्येव नायिकायाः वल्लभं स्तौति। तस्याः नायिकया ऐक्यभाव एवात्र कारणम्। समुद्रतीरविभागे। पूर्वस्य शालिनी वृत्तम्। अपरस्यानुष्टुप्।

**88. The friend to the girl, with the boy listening in, concealed :**

In one corner of the sandy beach,
Dazzling white like moonlight heaped up
There is a spot where a copse of trees
Throws a shade that resembles
Intense darkness concentrated.
Now this bower is barren, lonely
As he has not yet turned up, as fixed.
But our kinsmen, at the end of the hunt
For fish will soon arrive in their boats.
He hasn't come, but they will be here!

(Kuruntokai 123)

89. लवणविनिमयार्थं सार्थवाहस्य संघः कतिचिदधिवसन् यत्संनिवृत्तो दिनानि।
विजनमिव पुरं तद्द्योतते तद्वदेषः विजलविटपिचिह्नः निष्ठुरः स्यान्मरुस्ते ॥
इत्येवं त्वं वदेस्तर्हि प्रियायै वद किं गृहम्।
मुग्ध्य प्रोषितकान्ताया एकाकिन्या न निष्ठुरम् ॥124॥

'प्रवासं गन्तुमिच्छामि। मरुस्थली युष्मादृशां अबलानां दुःखावहा विविक्तत्वात्। तस्मात्प्रियां न मया सह नयामि' इति भणन्तं पतिं सखी वक्ति। 'लवणवणिजः लवणविक्रयार्थं ग्राममागत्य कतिचिद्दिनानि तत्रोषित्वानन्तरं ग्रामान्तरं गताः। तदनन्तरं स ग्रामो यथा विविक्तः स्यात्तथा स्यात् मरुस्थली शुष्कवृक्षचिह्नेति त्वं वदसि। परं तु प्रोषितकान्तायाः गृहमेवैकाकिन्याः निष्ठुरं द्योतते। इदं न जानासी'ति। मरुस्थलीविभागे। प्रथमस्य पद्यस्य मालिनी वृत्तम्। द्वितीयस्यानुष्टुप्।

**89. The friend of the girl to the young man, preparing to travel alone, leaving the girl behind :**

If you say that desert tracts are harsh
And they torment the hapless traveller, chieftain,
— Tracts grown over with omai trees, that look
Like an once teeming busy city where hordes
Of salt merchants stayed for a time and left,
A bustling city now forsaken, run to seed,
If desert tracts are unpleasant, then, chieftain
Can the lonely home prove pleasant to live for her?

(Kuruntokai 124)

90. क्षणिकमगणयित्वा यौवनं वित्तलोभात्
नहि गृहमुपयातः कुत्र वास्ते धवस्ते।
कुसुमकलितदन्तैरार्तवैर्विस्फुरद्भि-
रितिविहसति शीता प्रावृडुत्कृष्टगन्धा ॥126॥

सख्याः पुरः कन्योक्तिः। वर्षाकालप्रारम्भ एवागमिष्यामीति प्रियामुक्त्वा गतो वल्लभः वित्तार्जनार्थम्। वर्षाकाल आयातः न तु स कामी। तस्मान्नितरां दुःखिता कन्या "वर्षा नाम स्त्री सलिलपातपुष्टैः यूथिकापुष्पैरेव दन्तैः मद्धेलने विहसति 'कुत्र वास्ति ते धवः स तव सकाशमायास्यति वा न वेति' " इति विलपति। गोप्रचारविभागे। मालिनीवृत्तमेतत्।

**90. The girl to the friend :**

Lured by lucre he left me anguished
With no thought of the evanescence,
Of youth : nor back he comes to me,
Nor sends me tidings of where he is,
Though swear he did that he would be
Home with me with the first showers.
My plight is such : and now the rain
The canny slut, with the mullai bloom
She has nurtured, for her teeth
Must laugh at this my simple faith
That he shall yet come back to me!

(Kuruntokai 126)

91. काञ्चीवृक्षसमृद्धवप्रधनवद्विख्यातराष्ट्रेश्वर
क्षेत्रे यस्य बकाननाद्विगलितो मत्स्यस्ततो दैवतः।
दृष्ट्वाम्भोजसिताङ्कुरं बक इति त्रस्तस्तवासत्यवाग्
बन्दी चेतरवन्दिनोऽप्यनृतिनस्स्त्रीणां वियोगे तव ॥127॥

वाराङ्गनासंगमात् स्वगृहं प्रेप्सुना धवेन प्रहितस्य दूतस्य द्वारा सखी धवं वक्ति। 'तव राष्ट्रे काञ्चीवृक्षाः वप्रवत्प्रवृद्धाः सन्ति। तत्र क्षेत्रे दैवात् बकचञ्चोर्विगलितः मत्स्यस्ततः परं पद्मस्य सितं कुड्मलं दृष्ट्वापि बक एवेति त्रस्त आस्ते। तव दूतोऽयं बन्दी बहूनि मिथ्यावचांसि भाषते अस्माकं सान्त्वनार्थम्। इतः परं सर्वासां त्वया वियुक्तानां स्त्रीणां मनसि सर्वे बन्दिनोऽनृतवादिन इत्येवाशयः समुदपादयेदि'ति। यथा मत्स्यः बकमुखाद्विगलितः सरोजमुकुलं दृष्ट्वापि विभेति तथैवैतस्य बन्दिनः अनृतचारित्वात् स्त्रीणां तोलने सर्वे बन्दिनः मिथ्यावादिनः द्योतन्ते। बह्व्यः स्त्रियः तेन वियुक्ता इति एतस्मात् धवस्यानेकस्त्रीपरिग्रहः सूचितः। नदीतीरविभागे। शार्दूलविक्रीडितं वृत्तम्।

**91. The friend to the boy through the bard-messenger he had despatched :**

The fish which just had wriggled out
Of the beak of a crane then goes in terror
Of a well-formed bud of a lotus creeper
Mistaking it to be the killer crane,
In the waterfilled lands of your prosperous town!
The bard you have sent has proved a liar
Now all the women you have left to grieve
Will be apt to label all the bards
That are there in the world as rank liars!

(The reference to 'all the women' is an indication of the extent of the boy's promiscuity)

(Kuruntokai 127)

92. प्राचीसमुद्रस्य तटे निलीनः जरद्बकः कोऽपि विशीर्णपक्षः।
चेराधिराजस्य महारथस्य प्रधानपुर्या निकटे समुद्रे ॥
वसन्तमास्वादयितुं हि मत्स्यं मूर्धानमुन्नामयति प्रसह्य।
यथा तथा मे दयिता दुरापा चित्तव्यथासंवलितं नियत्या ॥128॥

संकेतानुसारं गत्वा नायिकामपश्यन् सव्यथं नायको वदत्यात्मगतम्। "प्राचीसमुद्रवासी कश्चिद् जरद्बकः पूर्वभक्षितं पश्चिमजलधिवासिनं मत्स्यविशेषं स्मृत्वा अधुना तावद्दूरगमनेऽसमर्थत्वात् स्वशिरः पश्चिमदिशामुखमुन्नमय्य यथा तिष्ठेदपूर्ण- कामस्तथैवाहमपि दुरापां बालां कामयमानः नियत्या विधिना व्यथितचित्तोऽस्मि" इति। पश्चिमदिग्विभागवर्णने तद्दिशायाः नृपतिं चेरराजमपि वर्णयति किंचित्। हे चित्त त्वं व्यथासंवलितमिति समर्थितव्यम्। समुद्रतीरविभागे। उपजातिः वृत्तम्।

**92. The boy to himself :**

Like a stork on the shore of the eastern sea
With wings weakened with age advancing
Driven by a longing to feast upon
The tasty ayirai that swims the waves
Of the western sea where Porayan rules
From the famous Tondi, his capital town,
Now raising its head with a fruitless desire,
In melancholy expectation
Of a meal of the fish beyond its grasp,
O my mind! you have fixed your sights
On the distant girl that's beyond your grasp!
You're bound to grieve, you're bound to suffer
The painful harvest of evil deeds
Of lives gone by, with no reprieve!

(Kuruntokai 128)

93. भूमिं भित्त्वा नैव कान्तो गतोऽधः नैवारूढं व्योम तेनालि यत्नात्।
पारावारो विस्तृतो लङ्घितो न तस्यार्थे त्वं मा शुचः प्रोषितस्य ॥
प्रतिदेशं प्रतिपुरं कुले चैव कुले क्रमात्।
अन्विष्यतां वल्लभो नः दुर्लभः स कथं भवेत् ॥130॥

सखी नायिकां वक्ति। "वल्लभो न प्रतिनिवृत्तः। कुत्र वा गतः? कथं वा तस्य वासस्थलं जानीयाव?" इति सदुःखं पृच्छन्तीं नायिकामेवं वदन्ती सान्त्वयति सखी। "सः भूमेरन्तः व्योम्नः उपरि वा समुद्रं लङ्घयित्वान्यत्पारं वा न गन्तुं शक्तः। अस्यां भूमौ प्रतिदेशं प्रतिपुरं प्रतिगृहं क्रमात् अन्विष्यतामस्माकं स कथं दुर्लभः स्यादि"ति। यः क्रमः सख्या वर्णितः स अनुसरणे नैव सुकरः। परं तु स्वस्याः जिह्वा-कौशलेन मनोदार्ढ्येन विशिष्य नायिकायां बद्धेन महता प्रेम्णा तस्याः वचः प्रतीतिकरं भवेदिति पठितॄणां रसिकानामनुमानं स्यात्। मरुस्थलीविभागे। प्रथमस्य शालिनीवृत्तम्। द्वितीयस्यानुष्टुप्।

**93. The friend to the girl :**

He could not have taken deep refuge
In the bowels of the earth or climbed to the heavens,
He could not have voyaged on the stormy sea
By walking on air : he must be somewhere!
Will he prove so hard to find
If we enquire at every house
In the towns and villages in every land
In every remote habitation?
Will he, my dear, prove elusive
If diligently we look for him,
If we search for him with a will to find?

(Kuruntokai 130)

94. क्षेत्रे गिरिस्थस्य कृषीवलस्य यथा प्रियङ्गुः शुकभुक्तशिष्टः।
स्थित्वा तथैवालि स वृन्तमात्रः वर्षाभिरुद्भिन्ननवप्ररोहः ॥
तथैव तद्भक्षितचारुभावा नितान्तशोकेन विलुप्ततेजाः।
एकाकिनी तेन विनापि जीवाम्यनुग्रहं पूर्वकृतं स्मरन्ती ॥133॥

युग्मम्। कन्योक्तिः सखीं प्रति। शुकैः यदा धान्यानि भुक्तानि तदा प्रियङ्गुः वृन्तमात्र एव तिष्ठति। वर्षाकाले वर्षैरुद्भिन्ननवकिसलयः भवति। तथैव प्रियः तस्याः संगमे पूर्वं तत्सौन्दर्यं भुक्तवान्। अतःपरं शोकपरायणा एकाकिनी प्रियङ्गुवृन्तम् इव तिष्ठन्ती तस्य पूर्वकृतानुग्रहस्य स्मरणादेव जीवितुं शक्ता, तेन विनापि। पर्वतविभागे। उपजातिः वृत्तम्।

**94. The girl to the friend :**

The millet planted by the hillman farmer,
Some stood bare, as the ears of corn
Had been cropped by pirate parrots
But, on the rains coming copious down,
They put forth shoots; like that, dear,
Though the chieftain had consumed mine
Feminine graces that had remained fresh
Virgin, untouched before we met
And I am now left debilitated,
I still breathe, there is life in me!

(Kuruntokai 133)

95. क्रियावलम्बं पुरुषस्य जीवितम् गृहाङ्गनानां पतिरेव जीवितम्।
इति प्रियेणैव हि बोधितं सखि ध्रुवं प्रयाणाद्विरमेत मा शुचः ॥135॥

सखी कामिनीं वक्ति। "पुंसां क्रियैव जीविताश्रय इति यः प्रियः बोधितवान् स एवेदमपि प्रावदत् गृहे स्थितानां कामिनीनां तु पतिरेव प्राणाश्रय इति। एतज्जानन् स कथं त्वां विहाय कर्मार्थं विदेशं गच्छेत्? तस्मात् मा विलप, स प्रयाणात् विरमेते"ति। मरुस्थलीविभागे। वंशस्थम् वृत्तम्।

**95. The friend to the girl :**

He was the one who said
"work is the life-blood of men!"
But it was he again that said
"For the women with handsome foreheads
Who choose to stay at home,
It's their men that form
Their sole sustaining force!"
So do not cry, my dear!
He surely shall abandon
His plans for a journey afar!

(Kuruntokai 135)

96. उद्दिश्य कामं बहुधा वदन्ति नवव्यथा नास्ति स नामयोऽपि।
भूत्वा स चाणुर्न च वृद्धिमेति न वा क्षयं मित्र परं तु कामः ॥
मतङ्गजस्याशनतो दलानां मदः स्फुरत्येकपदे समग्रः।
यथा तथैवोचितपात्रदृष्टेराविर्भवित्तत्क्षण एव कृत्स्नः ॥136॥

नायकः सखायं वक्ति। 'काममुद्दिश्य जनाः बहुधा वदन्ति। तत्सर्वमतथ्यमेव। कामः व्यथा नास्ति न रोगश्च। स आरम्भे अणुर्भूत्वा कालेन वृद्धिं नोपैति च। एताः सर्वा अविज्ञानादुत्पन्ना अभिप्रायाः। तत्त्वतः कामस्य प्रकृतिरेषा। यथा पत्राणामशनात् सहसा गजस्य महान्मद उत्स्फुरति तथैव कामोऽपि उचितपात्रे दृष्टे सति कृत्स्नः क्षणादेवाविर्भवति, न कणश' इति। पर्वतविभागे। उपजातिः वृत्तम्।

**96. The boy to his friend :**

Lightly they talk of love without knowing
It's surely not an ogre nor is it an ailment
It does not suffer waxing and waning
Nor does it ebb nor flow at times.
Even like the must of a pachyderm
Which spurts forth, fed by its diet of leaves
Love bursts forth in its fullest measure
The moment the chosen girl and the boy
As ordained by the god of love
Come together.

(Kuruntokai 136)

97. सुमुखि यद्यहमेमि विना त्वया चिरवियोगकरो विभृयां ध्रुवम्।
मदनुजीविनिरादरसंभृतं बहुदिनार्जितदारुणकल्मषम् ॥137॥

नायकः नायिकां वक्ति। 'हे सुमुखि, त्वामत्रैव विहाय प्रवासं गमिष्यामीति भीतासि। नाहमेवं गच्छामि। यद्यहं त्वां विहाय चिरकालवियोगं कृत्वा देशान्तरं गच्छेयं तर्हि मदनुजीविनां बहुकालमनादरेण निराकरणाद्यत्कल्मषं पापं संभवेत् तदहं ध्रुवं विभृयाम्' इति। पर्वतविभागे। द्रुतविलम्बितं वृत्तम्।

**97. The boy to the girl :**

I shall not leave you, as you fear,
For distant lands, darling ever!
If I so leave, may I be cursed
With the state of things where suppliants
Shy away for days together
From my door for fear of getting
Sent away with hopes frustrated.

(Kuruntokai 137)

98. प्रसुप्ताः पौराः स्युः सखि गतरजन्यां परमितः
समीपे शैलेऽस्मिन्शिखिपदपलाशद्रुमपतेः।
मृदुभ्यो वृन्तेभ्यो मणिरुचिरपुष्पाणि धरणौ
पतन्त्याकर्ण्य त्वं विगमिततमिस्रा सह मया ॥138॥

नायके गुल्मेषु तिरोभूते सखी नायिकां वक्ति। 'गतरजन्यां पौराः प्रसुप्ताः स्युः। परं धवागमनं प्रतीक्षमाणे आवां न सुप्ते। समीपस्थे शैले मयूरपदसमानपत्रयुतद्रुमस्य मृदुवृन्तेभ्यः पतन्ति मणिरुचिरपुष्पाणि श्रुत्वैव त्वया सह विगतनिद्रं विगमितरात्रिरासम्। धवो यद्यायातः तच्छब्द आवाभ्यां ध्रुवं श्रुत एव स्यादि'ति। पुष्पाणां भुवि पतनशब्दः श्रुतस्ताभ्यां इत्यस्मात् रजन्याः निःशब्दत्वं तयोः व्यग्रत्वं च सूचितम्। रात्रिसंकेतो नायकेन नानुसृत इत्येव सूचना। पर्वतविभागे। शिखरिणी वृत्तम्।

**98. The friend to the girl :**

The town would have been fast asleep
But you and I spent the long black night
Counting the fall on to the earth
Of every flower from the tree
(With leaves that look like the feet of peacocks)
Growing on yonder hill, my dear!
Others were sleeping but you and I
Kept awake through the long black night!

(The lover had failed to keep the night tryst the previous night. Tonight, on noting that he had come and concealed himself behind the vegetation, the saucy friend pointedly refers to how she and the girl kept the vigil throughout the night, listening to the smallest sound outside, in the hope that he would come.)

(Kuruntokai 138)

99. चिरं मया साकमियं वसन्ती लज्जा व्यथामन्वभवद्वराकी।
तटी सुभिष्टेक्षुसमृद्धसस्या सवालुका तोयतरङ्गतुन्ना ॥
सोढ्वा तरङ्गाभिहतिं चिरेण काले विनश्येत् कणशो यथैव।
तथानुरागाभिहतिं हि लज्जा सोढ्वा चिरं सापचिनोति काले ॥149॥

वल्लभेन साकं गृहात्पलायनमेव मार्ग इति उपदिशतीं सखीं नायिका वक्ति। अधुना तया लज्जा तिरस्कार्येति ज्ञात्वा लज्जामुद्दिश्य सानुकम्पैवं वदति। 'मया सह लज्जा चिरकालमवसत्। परां व्यथामनुभवन्त्यपि कामस्याभिहतिं सोढ्वा सधैर्यमयुध्यत। परं तु स्वादुतमेक्षुसमृद्धवालुकातटी यथा तोयतरङ्गतुन्ना शनैः शनैर्विनश्यति, तथैव कामस्य सन्तताभिहत्या क्षयमुपेत्याद्य विनष्टा संजाते'ति। मरुस्थलीविभागे। उपजातिः वृत्तम्।

**99. The girl to the friend who reports that the arrangements for her elopement are complete :**

Shyness, your lot is truly to be pitied!
You struggled with me so long and hard;
But now, as the narrow sandy stretch
Green with a crop of vaulting sugar-cane
Ravaged by the waves of the river, caves in
You held out for a time, beset by love
But with the onslaughts gathering strength
You weakened, and now are swept away!

(Kuruntokai 140)

100. यस्याद्रौ परिरक्षिणोपरिगृहे काष्ठानि संदीपितानू-
यामोदान्वितधूमवन्ति परितो राजन्ति तारा इव।
तस्योरस्थलमक्तचन्दनमभिध्यानात्समृद्धिं नयत्-
येनां कामरुजां क्षयं नयति तां चित्रं तदालिङ्गनम् ॥150॥

नायिका सखीं वक्ति। 'तस्याद्रौ क्षेत्रस्योपरिगृहे स्थितेन परिरक्षिणा संदीपितानि काष्ठानि सुगन्धिधूमवन्ति परितः नक्षत्राणीव राजन्ति प्रकाशन्ते। तस्य पर्वतपतेरुरस्थलं यदि मनसा ध्यातं तस्मिन्न सन्निहिते सति तर्हि कामव्याधिं प्रवर्धयति। परं तु यद्यालिङ्गित्तं तर्हि तामेव कामरुजां क्षयं नयतीति चित्रमि'ति। पर्वतविभागे। शार्दूल-विक्रीडितं वृत्तम्।

**100. The girl to her friend :**

He is the chief of mountain slopes
Where the faggots lighted by the hillmen farmers
In their lofty perches, sending off
Scented smoke do smirk as stars.
When I, my dearest, think of him,
Of his manly chest with sandal paste
I feel tormented; but when I can
Embrace him tight, the torment vanishes!
How explain these opposed sequels?
I do not know; can you tell me?

(Kuruntokai 150)

101. अन्तोऽयं मम यौवनस्य यदहं गन्तुं प्रसक्तो मरुं
हित्वाविस्मरणीयचित्तनिलयां दुःखाय मे वल्लभाम्।
यत्र स्वेन वियोगतः प्रणयिना ह्येकाकिनी पक्षिणी
दृष्ट्वा श्येनमरातिमात्मदयितस्यार्थे चिरं क्रन्दति ॥151॥

नायक आत्मगतम्। 'मरुस्थल्यां प्रणयिना वियुक्ता पक्षिणी श्येनं शत्रुभूतमागच्छन्तं दृष्ट्वा स्वदयितस्य पक्षिणः अर्थे चिरं करुणं क्रन्दति। धनप्रत्याशया चोदितोऽहं अविस्मरणीयचित्तनिलयां दयितां विहाय तस्याः शोकमविगणयन् यदहं गन्तुं प्रसक्तः तस्मादयमेव मे यौवनस्यान्त' इति। यौवनं प्रेमसर्वस्वमिति तत्वात् प्रेमिणीं विहाय प्रवासगमनं यौवनस्यान्त इति निश्चिनुते मध्येमार्गं स नायकः। मरुस्थलीविभागे। शार्दूलविक्रीडितं वृत्तम्।

**101. The boy speaks addressing his own mind :**

You lure me on to travel through the narrow pathless ways
Of rocky wastes where noticing the female bird alone,
Without its mate, the bird of prey from above falls
On the hapless victim from which pour poignant, plaintive notes
For its absent mate to save her from the ruthless predator!
To entertain the idea of crossing desert walks
Forlorn, filled with dreadful horrors, just to gather wealth
To go forth into distant realms leaving behind me
The girl I love, the constant centre of all my earnest thought
Will surely spell the end of youth, a mental ruin wrought
On helpless me by my own mind, my greedy scheming mind!

(Kuruntokai 151)

102. शावकः स्वकमठीमुखं सदालोकयन्नुपचिनोति तद्यथा।
प्रेम कान्तमुखदर्शनाच्चिरम् वृद्धिमेति सखि मोदसंभृताम् ॥

प्रेमिणीं त्यजति चेदयं धवः कच्छपीविरहितं यथा क्षयम्।
अण्डमेति मम चैव निष्कृतिः के विदुस्तदिह दोषवादिनः ॥152॥

नायिका सखीं वक्ति। 'कच्छपशावकः मातुर्मुखं पश्यन्नेव वर्धते। प्रेमापि कान्तमुखदर्शनादेव वृद्धिमुपैति। यदि धवः प्रेमिणीं त्यजति कच्छपीविरहिताण्डमिव क्षयमुपैति कामः। तदविजानन्तः इमे दोषवादिनः मामुद्दिश्य दोषमारोपयन्ति' इति। विवाहार्थप्रयत्नान् धवः नैव करोतीति व्यथिता जनानां किंवदन्तीवचनेन क्रुद्धा च सा विलपत्येवम्। पर्वतविभागे। रथोद्धता वृत्तम्।

**102. The girl to her friend :**

The young one of a turtle grows up, nourished
By gazing on its mother all the time,
Love, too, grows by the constant vision
Of the lord of her heart by the lady in love.
If he leaves me, fails to show up
Love is starved and fades away.
This, the people who live around
And lash me with their vilest tongues
Seldom know or care about.
They carry on with their carping ways
While unrequited, I waste away.

(Kuruntokai 152)

103. धूत्कारादविभेन्मनो गिरिवरे भीमादुलूकोत्थितात्
कीशानां च तरौ गृहस्य पुरतः शाखाप्लुतेर्निस्वनात्।
एवं पूर्वमभूत् प्रियेण चरितं शैले निशायां सखि
मार्गं संक्रमितं व्यवस्यति मनः साकं धवेनैव मे ॥153॥

कामिनी सखीं वक्ति। पूर्वं सा भीरुरवर्तत। पर्वतमार्गे उलूकस्य घूत्कारात् गृहस्य पुरतः तरुशाखाप्लवनशीलानां मर्कटानां रवाच्च नितरां भीतासीत्। परं तु कामपरवशत्वादधुना वल्लभेन सह तस्मिन्नेव गिरिमार्गे गन्तुं तस्याः मनः व्यवस्यति। अपायभूयिष्ठे पर्वतपथे आगच्छन्तं वल्लभं प्रतीक्षमाणा कामिनी नितरां दुःखमन्वभूत् इतः पूर्वम्। एवं प्रतीक्षणात् तेन सह मार्गचरणं श्लाघ्यतरमित्यपि सा चिन्तयति। कामस्य शक्तिर्महतीति भावः। पर्वतविभागे। शार्दूलविक्रीडितं वृत्तम्।

**103. The girl to the friend :**

In the days gone by, I used to tremble
With craven fear when the owl in the hill
Hoots at nights, when the monkeys crash
Leaping in the jack trees, branch to branch
In our own compound. That's all changed;
Now all that my heart yearns eagerly for
Is to follow him in his nightly walk
Along the endless path through the wooded hills
When he presses on to keep his tryst!

(Kuruntokai 153)

104. कृषीवलाः क्षेत्रमतिस्वनन्तः चिरंतनं धान्यकृते हि कृष्ट्वा।
बीजानि धृत्वा पिटके प्रभाते सायं सुमैः पूरितमानयन्ति ॥

"आयाति मुख्यस्य रथो निवृत्त्य सायंतने क्रान्तमरोः बुभुक्षोः।"
इति स्वनत्स्यन्दनकिंकिणीनां नायाति गम्भीररवो वनान्ते ॥
कृषीवलैः कृतो नादः श्रूयतेऽस्तमिते रवौ।
न श्रूयते तु कान्तस्य रथकिंकिणिनिस्वनः ॥155॥

नायिका सखीं वक्ति। "क्षेत्राणि कृषीवलाः चिरंतनं कृष्ट्वा प्रातः धान्यबीजानि यस्मिन्पिटके न्यस्य गताः तस्मिन् सायंकाले क्षेत्रसीमसु पुष्पितानि कुसुमानि न्यस्य सोत्साहमतिस्वनन्तः गृहं निवर्तन्ते। परं तु 'तव वल्लभः क्रान्तमरुः नितरां बुभुक्षुः आयाति' इति प्रकटयन् रथकिंकिणीरवः नायाति। अस्मदसंबद्धः कृषीवलरवः श्रूयते परं सोत्कण्ठं प्रतीक्षितः वल्लभस्यन्दनकिंकिणीरवो न श्रूयत" इति। वर्षानन्तरमेव बीजवपनमिति नियमात् वर्षागमनं सूचितम्। वर्षाकालरम्भ एवागमिष्यामीति प्रतिश्रुत्य गतोऽयं वर्षपातानन्तरमपि नायात इति शोकोद्रेकः। गोप्रचारविभागे। प्रथमस्य द्वितीयस्य चोपजातिः वृत्तम्। अन्त्यस्यानुष्टुप्।

**104. The girl to her friend :**

Having ploughed their millet fields, the farmers
Go forth at dawn with seeds to sow, in baskets
And return home with flowers in them in noisy chatter;
Their happy din is clearly heard. But the sound
The merry sound of tinkling bells in his chariot,
Proclaiming "He is back home hungry from his travels",
Is never heard through the meadow air of an evening!

(Kuruntokai 155)

105. निष्कृष्टवल्कं द्विज ते पलाशवृक्षस्य रक्तप्रसवस्य दण्डम्।
कमण्डलुं दामनिबद्धमंसात् व्रतिन् यताहार करे निवेश्य ॥

श्रुतावधीतिन् वहसि प्रिय त्वं वियुक्तकन्याधवयोगदक्षम्।
किमौषधं स्याच्छ्रुतिवाक्यजाते तद् ब्रूहि माक्षेपवचो भ्रमोत्थम् ॥156॥

नायकः विप्रमित्रं वक्ति। "किमर्थं कस्याश्चित् कन्यायाः कृते त्वं व्यथसे? विस्मर ताम्" इति वदन्तं सखायं नायकः सक्रोधं वक्ति। प्रथमपद्ये तस्य ब्राह्मण-लक्षणानि वर्ण्यन्ते। द्वितीये तस्य श्रुतिपाण्डित्यं वर्णयन् "तस्यां श्रुतो कामव्याधेः किमप्यौषधमुक्तं वा? उक्तं चेत् तद्वद। आक्षेपवचः मा ब्रूया" इति वदति। पर्वतविभागे। उपजातिः वृत्तम्।

**105. The boy to his friend :**

**O brahmin, youth, O brahmin youth!**
**Who carry in your hand a palasa stick**
**Stripped of the bark, with a low-slung vessel,**
**Who eats observing the rules prescribed!**
**Do you have the formula**
**For the medicine that can bring together**
**Loved ones, now parted, do you happen to have it**
**In your unwritten Scriptures? If you do have it,**
**Let me hear. The advice you proffer**
**Is useless to me, it's doubtless born**
**Out of your delusion, O brahmin youth!**

**(Kuruntokai 156)**

106. कुक्कुक्किति व्यनददेष शिखी विरावं श्रुत्वाबिभेदमलचित्तमकांडमेतत्।
अन्योन्यगाढपरिरम्भणसक्तमागाद्वक्षो वियोक्तुमुत खड्ग इव प्रभातम् ॥157॥

नायिकात्मगतम् वक्ति। "कुक्कुटः गृहस्य निकटे 'कुक्कू' इति विरावमकरोत्प्रभाते। ममामलचित्तमेतच्छ्रुत्वा अबिभेत्। संयोगमध्ये अन्योन्यगाढपरिरम्भणसक्तं वक्षः वियोक्तुं छेत्तुमागतः खड्ग इव प्रभातं मे आगच्छत्।" इति। सूर्योदयस्य सूचकः कुक्कुटविरावः। अविदितगतयामा बालेयं तं विरावं श्रुत्वा संयोगान्त आयात इति सदुःखं भाविनः वियोगात् भीता चासीदिति भावः। नदीतीरविभागे। वसन्ततिलका वृत्तम्।

**106. The girl to herself :**

"Kuck-coo!" cackled the cock in the backyard
To my blameless heart it came as a shock.
Came the dawn like a killer-sword
To cut adrift the pair of lovers
Tightly locked in warm embrace.

(Kuruntokai 157)

107. उच्चैर्गिरिः पार्श्ववसद्भुजङ्गान् अस्त्रेण विस्फूर्जथुना विशस्य।
सवेगमुद्दण्डरवेण सार्धं वातेन चायासि सनीरमेघ ॥
निसर्गतस्त्वं खलु नीरभावः हिमालयस्पन्दनकौशलोऽपि।
निराश्रयाः विप्रकृतास्त्वयेमाः दीनास्तदासां व्यथनं किमर्थम् ॥158

नायिका सखीं वक्ति तिरोभूते नायके। अशनीनां भयङ्करत्वं रात्रिसंकेतस्य निवारणार्थमुक्तम्। विशिष्य वर्षद्विगुणीकृतसापायता गिरिमार्गस्य सूचिता। अस्यां स्थित्यां विवाहाय यतस्वेति नायकं चोदयति। पर्वतविभागे। उपजातिः वृत्तम्।

**107. The girl to the friend, with the boy who had come for his night tryst, listening in :**

O cloud, pregnant with water, coming
With a terrible wind, who, with your thunder
Strike dead snakes on the slopes of the hills,
Are you not noted for your compassion?
There is no doubt you have the strength
To shake the famed Imaya* mountain.
Women who are alone, without their mates
Deserve your pity. Why, then, this fury?

(Kuruntokai 158)

(*Imaya is the Tamil version of the word Himalayas)

108. घृतस्फुरद्रक्तशिखः पतङ्गः इंचाकचञ्चुप्रियया समेतः।
उच्चैस्तरोरङ्गकुलायसंस्थः वियुक्तदुःखाय विरौत्यभीक्ष्णम् ॥

हिमागमे विस्तृतयामवत्यां रात्रौ वहत्यार्द्रतुषारवायौ।
प्रत्यानिवृत्तो न ममानुरागी किमेष तस्योद्वहनप्रयत्नः ॥160॥

नायिका सान्त्वनव्यग्रां सखीं वक्ति। "रात्रौ (अन्रिल नाम) रक्तशिखः पक्षी इंचाकवद्वक्रचञ्चुयुतया स्वप्रियया युक्तः तरोरुच्चैः शाखायां कुलाये नीडे स्थितः वियुक्तानां दुःखं वर्धयितुम् अभीक्ष्णं विरौति। रात्रिस्तु विस्तृतयामा हिमागमेन तुषारवायुना च नितरां शीता दुःखदायिनी च। मम वल्लभः स्वोद्दिष्टकाले न प्रत्यागतः प्रवासात्। एवं भूते तस्योद्वहनप्रयत्नान् त्वं प्रशंससि। मयि नितरां दुःखितायां किमेभिः प्रयत्नैरि"ति। पर्वतविभागे। उपजातिः वृत्तम्।
(इंचाकः मत्स्यविशेषः प्रिम्प् इत्याङ्गलाभिधानः)

108. The girl to her friend :

He hasn't turned up and now it's wintertime
When a bitter cold wind has started blowing hard
And the pair of anril perched on the lofty branch
Of the tada tree, the male bird with the head
Red like flaming fire and the mate with the beak
Curved like thc prawn, the pair all night keeps on
Sending notes of the deepest passion breaking
The hearts of lonely lovers! It's wintertime
And he isn't back. How can you come to me
With tales of how the chief shall hurry back
In time to marry me?

(Kuruntokai 160)

109. सूर्ये चास्तमिते निरन्तरमिदं वर्षं सवेगोद्यतं
वेतालान् प्रविकम्पयत् स्रवति नो माता समालिङ्ग्य तम्।
पुत्रं मातरिति प्रियेण निनदत्यस्मिन् क्षणे वल्लभः
गन्धेनाक्तभुजो जलार्द्रगजवद् गेहाद्बहिस्तिष्ठति ॥161॥

नायिका सखीं वक्ति वल्लभे तिरोभूते। पूर्वस्यां रात्रौ रात्रिसंकेतमनुसृत्य वल्लभः आयातः परं तु नायिका गृहाद्बहिर्नायाता। तस्माद्विषण्णः किंचिदिव क्रुद्धश्च वल्लभः गृहान् न्यवर्तत। अद्य स आगत्य गुल्मेषु तिरोभूतस्तिष्ठति इति विज्ञाय नायिका पूर्वस्यां रात्रौ मात्राज्ञानतः कृतं निर्बन्धं निवेदयति तस्य कृते। 'मम माता निकटस्थं पुत्रं परिष्वज्य मां मातरिति प्रेम्णाह्वयत्। तस्मिन्नेव क्षणे वल्लभः जलार्द्रगजवत् सर्वे यथावगच्छेयुस्तथा वक्षसि चन्दनेनाक्तः सन् आगत्य बहिस्तिष्ठति। किं वा कुर्यामि'ति निवेदयति तस्यानुनयार्थं विवाहयत्नाय चोदनार्थं च। पर्वतविभागे। शार्दूलविक्रीडितं वृत्तम्।

**109. The girl to the friend :**

It was dark. The ceaseless rain had made
The night still darker. The ghosts that haunt the slopes
In fear, were forced to flutter their eyelids often.
Mother held the son that wears the teeth
Of a tiger on his neck in tight embrace
And kept calling me as mother all the time.
The mountain chieftain with sandal unguent
Smelling sweet on his manly chest had come
And was standing like a tusker in the rain.
What did he plan to do, what indeed
He thought would happen, the night before, my dear?

(The young man had come to the tryst the previous night and gone away disappointed as the girl did not turn up. He had come again today and was remaining concealed and the girl narrates to her friend the circumstances which held her up so that he may understand and forgive her).

(Kuruntokai 161)

110. कस्यार्थे व्यथितोऽम्बुधे तव तटे मत्स्यार्थिनी दृश्यते
पंक्तिः सारसपक्षिणामजगणः श्वेतस्तृणादो यथा।
त्वत्कल्लोलविभक्तकेतकसुमोद्रेकः सितो भूरिशः
शर्वर्यामपि ते निरन्तरगियं कण्ठध्वनिः श्रूयते ॥163॥

नायिकात्मगतम्। "हे सागर! कस्य वल्लभस्यार्थे त्वं व्यथितोऽसि? त्वत्तटे सितवर्णाः सारसाः मत्स्यार्थिनः, तृणं खादन्तः अजा इव चरन्ति। तव तरङ्गविमर्दित-केतकपुष्पराशिः सर्वत्र दृश्यते। कस्यार्थे त्वं दुःखी, यतः निरन्तरं दिवा च रात्रौ च स्वनन्नेवासि" इति? समुद्रतीरविभागे। शार्दूलविक्रीडितं वृत्तम्।

**110. The girl speaks :**

Your waves with the crest of foam
White like the tazhai bloom
Dash endless all the day
And all through the endless night,
Against his far-flung shore
Where flocks of silvern gulls
Feast on the teeming fish.
Your lament, O sea, is heard
Unremitting all the day
And all through the silent night.
You suffer, restless sea,
From separation — pangs!
I know the malady;
You too are doubtless smitten!
To whom have you lost your heart?
Whose love does make you grieve.
That you keep me company
Unwinking all the night?

(Kuruntokai 163)

111. यथासारे नश्येल्लवणपुटभारः शकटगः
तयालोच्य व्रीडा प्रकृतिसुभगां कुन्तलशुभाम्।
सुरां पीत्वा कोऽपि प्रबलमदमत्तोऽप्यविरतं
यथा वाञ्छेदेनामभिलषसि कन्यामसुलभाम् ॥165॥

नायक्या निराकृतः नायकः आत्मगतं वक्ति। "आसारे वर्षे यथा शकटगः लवणपुटभारः द्रवीकृतः विनष्टः स्यात् तथैव प्रकृतिसुभगां कुन्तलशोभिनीं नायिकामालोच्य मम व्रीडा नष्टाभूत्। तया निराकृतोऽपि निर्लज्जस्तामेव वाञ्छसि, हे चित्त! यथा कोऽपि सुरां पीत्वा प्रबलमदमत्तः अपि सः पुनः पुनः तां सुरामेव वाञ्छेत् तथैव प्रेममत्तं भूत्वा तामसुलभामपि पुनः पुनः कामयस" इति। पर्वतविभागे। शिखरिणी वृत्तम्।

**111. The young man to himself :**

You fell in love with this, the comely girl
Of beauty uncontrived, with coiffeured hair,
And got repulsed; and now your sense of shame
All washed away like heaps of salt kept stacked
In cart lined up on a lofty bank, in rains
You seek her favour though repulsed, O mind!
Like drunkards full of mindless glee with draughts
Who long for more, you cannot give her up!

(Kuruntokai 165)

112. वीचिश्रेणिभिरम्बुधेः सुसरसान् मत्स्यान् विकीर्णान् सदा
खातुं यत्र बकाश्चरन्ति विपुलाः श्वेतच्छदाः लोलुपाः ।
सास्माकं नगरी नितान्तसुखदा तद्वर्तिनां प्रायशः
एकाकित्वसुदारुणा मम सखि प्रेमिप्रवासाच्चिरम् ॥166॥

कन्यां सखीं वक्ति । "इतरेषामेषां नगरी सुखदा स्यात् । परं प्रेमिणश्चिरप्रवासात् मम एकाकिन्याः सुदारुणा एव । पद्यस्य पूर्वार्धे तरङ्गविक्षिप्तान् स्थानभिन्नान् मत्स्यान् सुसरसान् खातुं लोलुपाः बकाः स्वयमपि तत्र तत्र चरित्वा मत्स्या यत्र सन्ति तान् अन्विष्य तत्र गत्वा खादन्ति यथा तथैव यदि प्रेमी मां कामयते मत्पार्श्वं आगत्य मां अनुभवितुमर्हति । यथा बकाः तथैव तेनापि कर्तव्यं यत्नत" इति । समुद्रतीरविभागे । शार्दूलविक्रीडितं वृत्तम् ।

**112. The friend of the girl, reacting to the confinement of the girl by her mother within the house :**

With the shoals of fish getting pushed
Continually by the waves,
The flock of cranes on the shore
Moves up to catch the fish.
Marandai, sure, is good,
A good town to live in dear,
But lonely, full of gloom
For the parted one in love!

(Kuruntokai 166)

113. दधि प्रमर्द्याङ्गुलिभिश्च ताभिः प्रमृष्टवस्त्रं कलुषं सुता ते।
अधावितं तत्परिधाय जुष्टं यदम्लमिष्टं पचति प्रसह्य ॥

ततः समुत्पन्नसतैलधूमसुवासिताक्षः प्रणयी तदश्नन्।
मुखप्रसादेन रसं व्यनक्ति विलोक्य सूक्ष्मं विकचं प्रियास्यं ॥167॥

धात्री वध्वाः मातरं वक्ति। विवाहानन्तरं नगरान्तरं गतयोर्दुहितृजामात्रोः कामपि प्रवृत्तिमलभमाना धात्री तयोर्मध्ये प्रेमसंबन्धं विचार्य ज्ञातुं तयोर्गृहं गता। कतिपयदिनानन्तरं स्वगृहं निवृत्ता तयोर्मध्ये विद्यमानमुत्कृष्टं प्रेमानेन पद्येन वर्णयति। 'पाकशास्त्रे अनुपगतकौशलास्माकं दुहिता। परं तु यत्पक्तमनया तत् महता मोदेनाश्नाति तव जामाता। तत् दृष्ट्वा हृष्टा भवति तत्प्रिये'ति। पाचनसमये अज्ञातक्रमा अङ्गुलीः वस्त्रे प्रमार्ष्टि, तदनन्तरं अक्षालितं तदेव वस्त्रं धृत्वा पतिं परिचरतीति वर्णनेन, तत्समये पच्यमानवस्तुभ्यो यो धूम उत्पतति तद्वारणेऽप्यसमर्था सा इत्यपि वाक्येन तस्याः अनैपुण्यमत्र प्रशस्तम्। यद्वल्लभ अनुभवति तत्प्रेमसुखमेव न पाककौशलमित्यभिप्रायः। गोप्रचारविभागे। उपजातिः वृत्तम्।

113. **The foster-mother to the natal mother -**

They are a precious, loving pair!
She cooks his food with earnest care,
Wiping her hands on the dress she wears
While she prepares the sweet-sour broth.
(She's careless, she wears the same
Without washing off the stains)
Her eyes are bothered, rendered painful
By the savoury smoke coming off
The dish she cooks. Her husband eats
With every sign of satisfaction
And your daughter's eyes — you must see
How they light up when they watch
How he likes the stuff she has made!

(Kuruntokai 167)

114. गजपतिरुपभुङ्क्ते यत्र कुण्डानुयोक्ता क्षुपमतिदलयुक्तं नीरपातेन षुष्टम्।
अनुभवति विनाशं प्रेम नास्येति जाने प्रलपति जनतेयं तूर्णमज्ञाततत्त्वा ॥170॥

नायिका सखीं वक्ति। "तस्याद्रौ बभुक्षुः कोऽपि गजपतिः कुण्डे किमपि भोज्यवस्तु अन्विष्यन् निर्झरजलपोषितं क्षुपं गुल्मं दलसमृद्धं लभते यत्नेन विना। तथैवाहमपि जाने तस्य वल्लभस्य सकाशे प्रेमसुखं ध्रुवं लभेयेति। परं तु इमाः पुरस्त्रियः मां च तं चोद्दिश्य किंवदन्तीः प्रलपन्ति। ताभिरहं न व्यथिता, तस्य प्रेमा न क्षयमनुभवति महतापि कालेने"ति। पर्वतविभागे। मालिनी वृत्तम्।

**114. The girl to the friend :**

In his hills an elephant
Hungry, seeking things to eat
In the pool, discovers a leafy plant
Fed by the roaring waterfalls,
His love is constant, will not suffer
Diminution with time passing.
I know it well — it's only these,
The wagging tongues that do not know!

(Kuruntokai 170)

115. पर्जन्यप्रगुणितभूरिनीरकुण्डे मत्स्यानां ग्रहणधिया प्रबद्धजाले।
आगन्तुः पशुरपथे यथा ध्रियेत पश्य त्वं मम वरणं परैस्तथा स्यात् ॥171॥

कन्या सखीं वक्ति। इयं कमपि कामयते। इदमजानद्भिः बन्धुभिस्तस्या विवाहार्थं कोऽप्यन्यश्चिन्त्यते। एनां वृत्तिं श्रुत्वा कन्या "यद्यन्यैः मे वरणं क्रियेत तद्दुःखायैव। मत्स्यग्रहणार्थं नीरकुण्डे बद्धे जाले यथा कश्चिदागन्तुः पशुर्गृह्यते तथैव स्या"दिति ब्रूते। मत्स्यस्थाने कामी, आगन्तुपशोः स्थाने अन्यो युवा यं विवाहार्थं बान्धवाश्चिन्तयन्ति। नदीतीरविभागे। प्रहर्षिणीवृत्तम्।

**115. The girl to the friend who got worried at the attempts of other to press their suit with the parents of the girl :**

You wait, my dear, these exercises
Are not going to help these strangers.
It's unlikely, its incongruous
Like an animal straying into the net
Spread by fishermen to secure fish
In a deep, wide pond enriched by
Copious rains and provided with bunds.
How can the strangers get fulfilled?
You don't have to worry, they shall fail!

(Kuruntokai 171)

116. झंकारनिस्वनवने मृगयापरेण
संयक्त्वया पशुरिह व्यथितः प्रमुष्य।
अस्तंगतो रविरिमे शुनकाश्च खिन्नाः
मागच्छ सा निकट एव पुरी गिरौ नः ॥

यत्राद्रिपार्श्वरुहतुङ्गसमृद्धवंशाः अग्रावकृष्टमधुकोषगणाः प्रसह्य।
दीर्घाननद्विरदभक्षितपल्लवत्वात् ह्रस्वा निकृत्तशिखरा निबिडा भवन्ति ॥179॥

कामस्यारम्भकाले सखी नायकं वक्ति। "मृगयार्थमागतस्त्वम्। संयक् पशुरत्र त्वया धावितः व्यथितश्च। मृगयाफलं संप्राप्तम्। त्वत्सहायाः श्वानश्च खिन्नाः। तस्मादस्माकं पुर्यां रात्रिमुषित्वा प्रभाते स्वपुरीं गच्छ। कुत्रास्ति नो ग्रामः? पर्वतपार्श्वे यत्र गजैर्निकृत्तशिखराः भक्षितपल्लवा वंशाः निबिडाः सन्ति, ये वंशाः मधुकोषान् स्वाग्रैर्विदारितवन्तः, स एवास्माकं ग्रामः निकटस्य इति। नायिकायाः नायकस्य च प्रेम मुकुलितं दृष्ट्वा तत्प्रवर्धनार्थं सखी तमेवं वदति। पर्वतविभागे। वसन्ततिलका वृत्तम्।

**116. The friend to the boy :**

You have been hunting
In the noisy jungle
All through the long day
It's now evening
Your dogs are tired
Do not go, chieftain.
Yonder is our village
Where the elephant, unknowing,
Crops the green shoot
Off a cluster
Of dense bamboo
That had been sweetened
Through the chance scratching
Of a beehive nearby,
Yonder is our village
Marked by bamboo
With shortened stems.
Do not leave us,
Youthful huntsman!
It's easy to find
Our village on the summit!

(The friend, through these suggestive words fixes a nightly tryst).

(Kuruntokai 179)

117. तव प्रेयानीदृक्प्रकृतिरिति मां शोकभरितां
किमर्थं साक्षेपं प्रवदसि पुरे यस्य महिषी।
प्रसूतं वत्सं न त्यजति तृणकाङ्क्षाप्रणुदिता-
प्यहं गेहे तस्य व्यवसितपुरन्ध्रीव्रतकृतौ ॥181॥

नायिका सखीं वक्ति। "किमर्थं त्वं मे पतिं गर्हसे शोकभरितायाः मे त्वद्भाषणं नितान्तकटु। तस्य पुरे महिषी अपि क्षेत्रिणा रज्जुभिर्बद्धस्य स्ववत्सस्य निकटे एव वर्तते। गोप्रचारे वर्धमानं स्वादुतरं तृणं खादितुं यः कामः तमपि संयम्य वत्सपार्श्वं न त्यजति। अहमपि महतो गृहस्य गृहिणी। व्रतकृतिषु गृहसंबन्धिष्वितरकर्मसु च व्यवसिता व्यापृता पुरन्ध्री, न केवलं तस्य पत्नी"ति। नदीतीरविभागे। शिखरिणी वृत्तम्।

**117. The married woman to her friend who has just spoken critically of the straying husband :**

What useful purpose is served, my dear, by these
Critical words which you have used against him?
You know I suffer. But you should also know
That like the female buffalo staying put
At the side of her new-born calf, tethered
By the farmer fast to post, now content
To graze the grass that grows around the stall,
I am a senior matron on whom lies
Many a duty in this teeming household.
So nothing's gained by talking ill of him!

(Kuruntokai 181)

118. नन्दिन्याः शिखिपिच्छकेशनिवहग्रन्थ्याः सुजालाक्षिणि
जालाचारविदां मनो मम सखे तीरे गृहीतोऽम्बुधेः।
त्यक्त्वोत्कर्षजघन्यतोलनमिदं तत्रोपरुद्धं स्थिरम्
मा गाः धीवरवासभूमिमुत नः सत्यं वचो जानताम् ॥184॥

कामी सखायं ब्रूते। 'समुद्रतीरं गत्वा प्रतिनिवृत्तस्य ते मनः किंकारणेन नास्ति स्ववशे' इति पृच्छसि। तत्र धीवरकुमार्याः नेत्रजालेन गृहीतं मे मनः। ममाभिजात्यं तस्याः नीचजन्मेत्यादि भेदान् उत्कर्षजघन्यरूपान् अविगणय्य मन्मनः तत्रैव दृढमुपरुद्धमस्ति। जालाचारविदां कुमारी नेत्रजाले सर्वान् ग्रहीतुं समर्थेति विज्ञाय पुंभिस्तत्र न गन्तव्यमिति मे मतिः। तदनुभववतां मद्विधानां वचः सत्यमेव। तद्विरुद्धतया नाचरितव्य"मिति। समुद्रतीरविभागे। शार्दूलविक्रीडितं वृत्तम्।

**118. The boy to his friend :**

People of wisdom testify
In accord, solely, with the evidence
Of their sensed : let no one stray
Into that hamlet of fisherfolk!
My royal heart has been ensnared
With little hope of its retrieval
There in that village, without a thought
Of the difference in the social scale!
For in that village on the shore of the sea
Where straying fish are gathered by
The fishermen's nets with the finest mesh,
Lives the girl with locks of hair
That resemble peacocks' feathers!
Men that stray are apt to be
Gathered in by the pair of eyes
Of the comeliest daughter of the fisherfolk!

(Kuruntokai 184)

119. अशनिरसितघोषेणाम्बुदो यस्य देशे वितरति पृथुवर्षं येन जाती सुपुष्टा।
ललितकुसुमदन्तं तारमाविष्करोति त्यजति नयनयुग्मं स्वापमस्मै प्रिये मे ॥186॥

नायिका सखीं वक्ति। "अशनिरसितघोषेण साकं तस्य देशेऽम्बुदः पृथुवर्षं वितरति। तेन सुपुष्टेयं जाती विकसति। तस्याः सितप्रसूनानि दन्तवत् द्योतन्ते मे नयनयुग्मं स्वापं त्यजति वल्लभस्य कृते। किं वाहं कुर्यामि" ति। "वल्लभेनोद्दिष्ट-वर्षाकालोऽयमागतः स तु नागत" इति दुःखक्रान्ता नायिका सान्त्वनपरां सखीं वक्ति। गोप्रचारविभागे। मालिनीवृत्तम्।

**119. The girl to her friend :**

The clouds over his country
With thunder resounding
Have sent down ample rains
And the mullai, well-nourished
Has blossomed forth with flowers
White like a row of teeth.
My eyes have since renounced
All claims to sleep, my dear,
In favour of the chief
Of the blooming meadowlands.

(Kuruntokai 186)

120. यदद्रेरुत्सङ्गे विहितवसतिः शम्बरसुतः
पयः पीत्वा मातुर्मधुरमधुरं सोत्सवमनाः।
तरुच्छायामेत्योत्प्लवति स हि मुख्यो दृढतरः
शिलायाश्चित्तं मे क्षपितविभवं तन्न विमृशत् ॥187॥

नायिका सखीं वक्ति। "तव वल्लभो न स्थिरधीः। कालेन स्वकर्म कृत्वा धनसंचयेन गृहं निवर्तितुं तावत् सामर्थ्यं तस्य न स्यात्" इति वदन्तीं सखीं तद्गर्हण मसहमाना पतिव्रतेयं नायिका सरोषं प्रतिवदति। "शम्बरो नाम कश्चिद्वन्यपशुः। तस्य वत्सः पयः पीत्वा समोदं छायायां क्रीडति। तस्य शैलस्येशः शिलाया अपि दृढतरः। परं तु मे चित्तमनुरागहेतोः तन्नविमृशत् क्षपितविभवं भवति। तस्य मनोदार्ढ्यं ज्ञात्वापि कामस्य कारणात् दुःखिनी अहम्। अयं तस्य न दोष" इति। पर्वतविभागे। शिखरिणी वृत्तम्।

**120. The girl to the friend :**

In his hill the young one
Of an animal sucks the milk,
The sweetest food that flows
From the udders of its mother
And frisks about in joy
In the grateful shade of trees.
The chief of the hills is tough
Firm-minded, stronger far
Than the rocks in his domain.
It's only my brimming love
That makes me waste away
Not taking account of
His wondrous strength of mind.

(The girl's spirited retort in defence of her lover is to the remark made by the friend that his delay in coming back home may be due to his incapacity to accumulate the desired amount of money.)

(Kuruntokai 187)

121. जातीलतायां कलिका भजन्ते पाकं च ताभिः सह सुन्दरीभिः ।
उपात्तवर्षर्तुरलंकृतोऽस्ति समृद्धिपूर्णो ननु गोप्रचारः ॥
मद्रूपसौन्दर्यमपाकरिष्णुरायाति सन्ध्यासमयः सवेगः ।
परं तु नायाति वियोगहेतोर्मद्भूषणप्रश्लथने प्रवीणः ॥188॥

नायिका सखीं वक्ति। "जातीकलिकाः पाकं भजन्ते विकचा भवन्ति। गोप्रचारश्च सुन्दरीभिर्जातीसुमैः इतरपुष्पैश्चालंकृतः प्रकाशते। मद्रूपसौन्दर्यस्य स्तेनः सन्ध्याकाल आयाति सवेगम्। परं तु वियोगेन मद्भूषणप्रश्लथने प्रवीणः मच्छरीरकार्श्यकृद् धवो नायाती"ति। गोप्रचारविभागे। उपजातिः वृत्तम्।

**121. The girl to the friend :**

The mullai is blooming, the meadow wide
Puts on added splendour, nourished
By the bountiful rains that have come down,
But he doesn't come — the one that loosens
The ornaments I put on my person;
But comes the evening, the destroyer
Of all my beauty, all my grace!

(Kuruntokai 188)

122. शाखासु पक्षिनिवहः सहितः सखीभिः
संयोगजातरभसः स्वमुदा प्रवृत्तः।
चक्रे रवं न विगणय्य शुचं परेषाम्
प्रेमी गतः सखि तदा दयितां विहाय ॥

आगन्तुकः प्रतिनिवृत्त्य यदाभिगच्छेत्
पार्श्वं ममालि न हि संहर केशपाशम्।
मां मा स्पृशेति च दृढं तमहं रुणध्मि
तत् त्वं विशङ्कमिह पश्यसि तन्निवृत्तौ ॥191॥

कन्योक्तिः सखीं प्रति। युग्मम्। "यदा पक्षिणः सायंकाले स्वसखीभिः संयुक्ताः संयोगरभसाः वियुक्तानामितरेषां दुःखं अविगणय्य रवं चक्रिरे तत्काले स दयितां मां विहाय देशान्तरं गतः। तस्मात् नितरां क्रुद्धास्मि। सखि, इदं तन्निवृत्तिकाले विशङ्कं त्वं द्रक्ष्यसि। सः मम केशपाशं वन्द्धुं मां स्प्रष्टुं वा मत्पार्श्वमभिगच्छेत् तदा तं दृढं रुणध्मि, मा मैवं कुरु, त्वं तु मे आगन्तुकः संभूत इति च वदिष्यामी"ति। गोप्रचारत्रिभागे। वसन्ततिलका वृत्तम्।

**122. The girl speaks :**

The village street resounds with the scandal!
If I loathe it, if panick
My love for him shall wither away.
But dear friend! If I ignore all
These village gossips, my bashfulness -
Of all I have, the highest prized,
The highest treasured in a girl's heart
Shall run dry — how sad my plight!
On that fateful day in the secret bower
Our love zoomed and he gobbled up
My virgin splendour — now I am
Like a broken tree with its hanging branch
Not quite touching the ground underneath,
More dead than living, pitied by all
Broken in hunger in a heedless rampage
By the lusty bull of an elephant.

(Kuruntokai 191)

123. पात्रं ज्वलन्नीलमणिप्रकाशं तालीसमाकीर्णमिवाम्बुपूर्णम्।
स्वनत्खगोच्चाटनभेरिकाभमण्डूकवत्पल्वलमालि यत्र ॥

तद्देशमुख्यः प्रयियासुरह्नि तस्मिन्समेत्यात्मभुजान्तरेण।
मामालिलिङ्गायतचन्द्रिकायाम् अद्यापि जातीसुरभी ममांसौ ॥193॥

"वल्लभस्य प्रवासदुःखं निपुणं संयतं भवत्ये"ति वदन्तीं सखीं नायिका वक्ति। "तस्य देशे नीलमणिरिव द्योतत् सुरापात्रमिवाम्बुपूर्णं पल्वलमस्ति। तस्मिन् क्षेत्रेभ्यः धान्यतस्करान् खगान् उच्चाटयितुं कन्याभिर्या भेरिका शब्द्यते तद्वत् मण्डूकाः निरन्तरं रटन्ति। तद्देशमुख्यः प्रवासारम्भे रात्रावागत्य जातीकुसुमैरलंकृतः मामालिङ्गत् भुजयोः। पश्यालि, मम भुजावद्यापि जातीसुरभी वर्तेते। तस्मात्तं प्रोषितमपि अत्रैव स्थितं मन्य" इति। जातीकुसुमानां सौरभ्यमेतावति काले न घ्राणयोग्यं स्यात्। परं निरवधि यत्प्रेम तदेव तस्याः मनसि नित्यसुरभि वर्तत इति भावः। गोप्रचारविभागे। प्रथमस्य पद्यस्योपजातिः वृत्तं, द्वितीयस्यन्येन्द्रवज्रा।

**123. The girl to her friend :**

**The chief of the hills, where, on the slopes**
**In the shallow pool, the toads**
**Set up a roar like the beat of drums -**
**Came on a moonlit night**
**Decked, my dear, with mullai blooms**
**And embraced my shoulders tight.**
**He left me, true, for distant climes**
**But look, my shoulders still**
**Give off the bouquet of the mullai blooms,**
**The scent is fresh on them!**

**(Kuruntokai 193)**

124. कथं वा निर्देश्यं मम सखि मनः क्षोभकलुषं
प्रमथ्नीतः शब्दौ कलितरिपुभावौ तदनिशम्।
समुद्रादुत्थाय प्रसभरसितं मेघनिवहैः
निशम्यैतद्वन्यैः शिखिभिरुपगीतं रभसितैः ॥194॥

कन्योक्तिः सखीं प्रति। वर्षाकाले प्रत्यागमिष्यामीति प्रेमी प्रतिज्ञाय गतः। वर्षर्तुरायातोऽधुना परं तु सः नायातः। वर्षाकालचिह्नभूतौ द्वौ रवौ तस्याः मनसि दुःखं उत्पादयतः, प्रेमिणः प्रतिज्ञां तदननुसारणं च स्मारयन्तौ तां नितरां क्लिश्नीतः। मेघगणानां गर्जितं, मेघदर्शनात् गर्जितश्रवणाच्च नितरां मुदितानां मयूराणां कोलाहलश्च एतावेव शब्दौ दुःखकारिणावस्याः। अस्मासु दुःखिषु इतरेषां सुखानुभवस्य दर्शनं श्रवणं वा अस्मद्दुःखं पुनरुद्दीपयतीति ज्ञायते अनुभवात्। मयूराणां प्रमोदः अस्याः दुःखोद्दीपकः भवतीत्यनुमेयम्। गोप्रचारविभागे। शिखरिणीवृत्तम्।

**124. The girl to the friend :**

What does this mind of mine
Want to do now, dear?
The rain-cloud climbing high
Has been rolling out
Fearful peals of thunder,
The peacocks of the woods
Stirred up by this roar
Set up a noisy cackle.
These two factors lying
Beyond my control churn
And agitate my mind!

(Kuruntokai 194)

125. कान्ताप्रधान यदि ते स्म ददात्यपक्वं
निम्बाफलं ननु तदात्थ गुलस्य खण्डम्।
शैलाज्जलं शिशिरमद्य तया तु दत्तं
सोष्णं भणस्युत तव प्रणयो हि तादृक् ॥196॥

सखी नायकं वक्ति। 'पूर्वस्मिन्काले यदा भवान् एतस्यां प्रेमबद्ध आसीत् तदा यदि अपक्वं निम्बाफलं सा भवते दद्यात् गुलस्य खण्डं तदाह भवान्। अधुना तु यदि तया शीतं शैलह्रदजलं दीयते तदपि भवान् 'सोष्णमेतद् न मे रोचत' इति भणति। भवत्प्रणयो हि तादृग्विध' इति। कटुत्वपराकाष्ठेति वर्णनीयं निम्बाफलमपक्वं तया दत्तं प्रणयिना गुलखण्डमिति श्लाघितम्। परं तु पण्यस्त्रीसख्यानन्तरं भार्यया दत्तं स्वादु शीतं निर्झरजलमपि सोष्णमिति तेन निराकृतम्। अत्र न वस्तुनः नैसर्गिकगुणः परं तु मनस्थितिरेव प्रमाणम् भवति प्रेममीमांसायाम्। नदीतीरविभागे। वसन्ततिलका वृत्तम्।

**125. The friend of the girl to the husband seeking admission to the house after a sojourn with prostitutes :**

In those days when my dear friend
Offered you the unripe fruit
Of the neem tree you did pronounce that
The sweetest bit of jaggery!
Today if she offers you
The sweet cool water from Parambu hill
Of king Pari, drawn in the month
Of January, you dismissed it
As warm, as unfit to be imbibed!
Such is the tasic nature, chieftain,
Of the quality of affection!

(Kuruntokai 196)

126. किं वा करोमि जलमुक्तडिदादिशस्त्रैः
पर्जन्यबिन्दुभिरसौ शिशिरानिलेन।
मां प्रेमिणा विरहितां व्यथितां नितान्तं
हन्तोपसर्पति यमः शिशिराभिधानः ॥197॥

कन्या सखीं वक्ति। उद्दिष्टकाले नायातः प्रेमीति दुःखायमाना शिशिरर्तुमागतं वीक्ष्य नितरां व्यथिता "एषा शिशिरर्तुः मम कृतान्त एव। मेघविद्युदादिशस्त्रैः जलबिन्दु हिमानिलादिसहायैः साकं मां हन्तुमेवोपयाति। इतः परं न जीवितुं शक्नोमी"ति नितरां दुःखिता ब्रूते। समुद्रतीरविभागे। वसन्ततिलकावृत्तम्।

**126. The girl to the friend :**

What shall I do? The clouds have gathered
And with thunder and flashes of lightning
It has been raining profusely.
Now the bitter wind of the cold season
Blows ruthlessly with drops of water.
The god of death has taken the form
Of the cold season and comes for me
Intent, dear, on taking my life!

(Kuruntokai 197)

127. छित्त्वा तरुन्निहितबीजतले प्रियङ्गुः सम्यक्प्ररुह्य परमिक्षुवदात्तपुष्टिः ।
अग्रं हि यस्य नमितं करिणीकराभं संदंशवद्भसितसंधरणे प्रवृद्धेः ॥

संपुष्टधान्यपरिरक्षणसंनियुक्तावाघाततः शुकगणस्य दिवात्र यावः ।
मागच्छ चन्दनरसाक्तविशालवक्षाः आयास्यति प्रसविनीह गिरीश सद्यः ॥198॥

सखी संकेतान्तरं दिशती नायकं वक्ति । "क्षेत्रिणः तरून् छित्त्वा क्षेत्रं समीकृत्य बीजानि तत्रावपन् । तानि संयक्तप्ररुह्येक्षुवद् बद्धपुष्टीनि दृश्यन्ते । सस्यगुच्छस्य अग्रं करिणीकराभं वक्रत्वात् । भसितानामंगाराणां संधरणे ग्रहणे उपयुज्यमानसंदंशवत् प्रवृद्धेः कारणात् दृश्यन्ते । शुकगणस्याघाततः धान्यानि परिरक्षितुं मात्रा नियुक्ते तव वल्लभा चाहं च दिवा क्षेत्रं यावः गच्छावः । तस्मात् तत्रैव संगमः स्यात् । अत्र विशिष्य चन्दनगन्धोपेतः मागच्छ । प्रसविनी माता सद्य आयास्यति त्वां च द्रक्ष्यति" इति । पर्वतविभागे । वसन्ततिलका वृत्तम् ।

**127. The friend of the girl to the boy :**

Mountain chief, we have been asked
By our mother to go to the fields
Where grow the crop in succulent clusters,
The ears curved like tongs — the crop
That has been coming up in the mountain sides
Cleared of trees cut down and burnt!
We've been told off to guard the grain
From the parrot flocks; we shall be spending
Most of the day in the millet fields
Do not come on nighty tryst
Perfumed by rich sandalpaste!
Do not meet us, mighty chieftain,
Here in tryst: for mother may suspect
And surprise us; pray, do not come:

(The negative apparently gets emphasized here, in this piece. But the real message is that the trysting spot is changed from under the tree in the garden to the millet fields and the time from the dead of night to the day.)

(Kuruntokai 198)

128. वनस्थल्यां गुल्मो जनयति सुमं नेत्रसुखदं
ततः सूचीगुच्छं सृजति निशितं तोदनपटुम्।
मनो मेऽविच्छेदं व्यथितमधुना निर्भरशुचा
स पूर्वं रक्तोऽभूत्सखि स परिणामे कटुतरः ॥202॥

नायिका सखीं वक्ति गृहं पुनः प्रवेष्टुं नायकस्यानुमतिर्न देयेति विवक्षुः। "एकस्मिन्नेव गुल्मे नेत्ररसायनानि कुसुमानि स्पृष्टे तोदनपटुः कण्टकगुच्छश्च उत्पद्यन्ते। तथैव पूर्वं मे मोदकरो भूत्वाधुना स दुःखकृदेव संभूत" इति। वाराङ्गनासंगम एव कण्टकवत् तां हिनस्तीति भावः। नदीतीरविभागे। शिखरिणी वृत्तम्।

**128. The girl speaks :**

You plead for him! you beseech me
To take him back, to welcome him
Besmirched as he is back to my house!
It's true he gave me joy profound
Before he was trapped by her coquetry,
But you seem to forget the pain, the heart-ache
I have suffered at his callous hands.
We see, in season, in the leafy meadow
The tiny bloom of the nerunji plant
Distilled joy to the beholder -
But set with thorns, envenomed,
Which hurt the finger that plucks the flower :
His love like the blossom, set with thorns
Is at once a source of bliss and pain -
Present pain at his broken troth
Shot through with gleams of remembered bliss,
Of affection recollected.

(Kuruntokai 202)

129. न देशे दूरस्थे तरणकटुमध्याचलतले
न दृश्या यत्र स्यात्तरुनिविडपङ्क्तिर्वसति सः।
समीपस्थः सन्मां परिहरति नाथो मम सखि
यथा लोकस्तीव्रव्रतिनमवसन्ना मम रतिः ॥203॥

कन्या सखीं वक्ति। "नाथो नायाति मां द्रष्टुं। स दूरदेशे न वसति यत्र मार्गे तरणकटवः अचलाः मध्ये वर्तन्ते न वा निविडतरुपङ्क्तिः अदृश्या वर्तते। स समीपस्थ एव। परं तु मां परिहरति यथा लोकस्तीव्रव्रतिनं मुनिं। तस्मान्मम रतिरवसन्ना, नाशं गते"ति। कन्या पातिव्रत्यचरणेन तीव्रव्रती मुनिरिव। धर्मानुष्ठानपरस्य पुरतः उदासीनपराः सर्वत्र क्लिष्टा एव तं परिहर्तुमेव यतन्ते इति प्रसिद्धम्। नदीतीरविभागे। शिखरिणी वृत्तम्।

**129. The girl to the friend :**

His home is not in far off lands
With hills and woods impassable
That bar the way from our place.
He does tarry near where we live,
He could have come many a time
To dry my tears: but no ! He wouldn't
He stayed off like the hermit folk
Who shun the teeming haunts of men
In pursuit of their sacred vows.
By physical distance he was quite nearby
But mentally he was far away.
'Tis true enough, dear, I felt for him
A passion that once did incline me
To forgive him his many faults
But not any longer! He has ceased to draw out
My boundless love, my forgivance.

(Kuruntokai 203)

130. कामः कामोऽविदितविभवा इत्यमुं चर्चयन्ते
कामो नार्तिः प्रिय भयकरी व्याधिराहो न चायम्।
उच्चक्षेत्रे तरुणतृणमास्वादितुं सक्तचित्तः
जिह्वामर्शाज्जरठवृषभः केवलात् निर्विशेत्तम् ॥
तथैवात्मसरवे कामः संपुष्टांसयुग स्मृतः।
पौनःपुन्यान्नवतयानन्दस्फूर्तेः प्रदीपकः ॥204॥

कामेन व्यथितं सुहृदं दृष्ट्वा कश्चित् कामं दूषयति। कामी नायकः तं वक्ति। "काममुद्दिश्य तदज्ञाः बहुप्रकारेण चर्चयन्ते, स आर्तिरिति, स व्याधिरित्यपि च। कामो नार्तिर्न चापि रोगः। शरीरानुभवानन्तरं तमनुभवं मनसि स्मृत्वा स्मृत्वा यां स्थितिं सोऽधिगच्छति सा स्थितिः काम इति ज्ञेया। वयोऽधिकत्वात् केनचित् वृषेण बालतृणं खादितुं न शक्यम्। परं तु सः जिह्वया तृणं परामृशन् पूर्वानुभूतं सुखं स्मरति। कामश्चैव मनस्येव अनुभवितव्यः कोऽपि विशिष्टो रस" इति। काममुद्दिश्यान्यादृशं युक्ततमं लक्षणमत्र वर्णितम्। पर्वतविभागे। प्रथमपद्यस्य वृत्तं मन्दाक्रान्ता। द्वितीयस्यानुष्टुप्।

**130. The friend of the boy to him :**

Lightly they talk of love without knowing
It's surely not an ogre, nor is it an ailment :
Even as the cow now past its prime
With infirm teeth and powerless jaws
Noticing young grass on rising land
Puts out its eager aged tongue
Only to feel the blade of grass,
Love is remembering, recollecting the joys
Reliving the moments of total bliss
That was yours sometime and is no longer, now.

(Kuruntokai 204)

131. अमृतमिव नितान्तस्वादुवाचस्तु तस्याः
मधुरमधुरभावो दुःखदायी ममेदृक्।
असुगमसहवासस्तेन कामेन नूनं
तमुत परिहरन्तु प्राज्ञवर्याः समग्रम् ॥206॥

स्ववृत्तिं गर्हयन्तं सुहृदं नायको वक्ति। "तस्याः बालायाः अमृततुल्यवचन-भाषिण्याः नितान्तमधुरभावो ममेदृक्दुःखदायी भवति। तस्यां यः कामो निबद्धो मया स असुगमसहवासः, तं कामं मनसि वर्धयित्वा जीवितुं मे दुश्शंकम्। तं कामं प्राज्ञवर्याः समग्रं पूर्णतः परिहरन्तु, तेन मार्गेण गच्छतः सुखं सर्वात्मना न भवेदि"ति। पर्वतविभागे। मालिनी वृत्तम्।

**131. The young man to his friend :**

O men of sense! If the noble qualities
Of the girl whose talk is sweet beyond words
That overpowers the listener like
A draught of heavenly ambrosia —
If the noble qualities themselves can
Torment one in the way you see
Then love is not a welcome thing.
Its hard to live with, hard to harbour.
So be advised, stay away
From this passion which men call love!

(Kuruntokai 206)

132. नल्लीश्वरस्य रथिनः पृथुगोप्रचारे गोपैः स्वकर्मपटुभिः परिरक्षिताभ्यः ।
धेनुभ्य उत्तमघृतं परिगृह्य तस्मिन्-पक्वो महार्हसिततण्डुल ईषदुष्णः ॥

पात्रेषु सप्तसु हितो धव राजतेषु दीयेत वायसबलिर्लघुरेव स स्यात् ।
आतिथ्यलाभमुपसूच्य रुतेन काको यः संपुपोष दयितां क्षपितां वियोगात् ॥210॥

'त्वया मे प्रिया निपुणं सान्त्विता मय्यसन्निहिते' इति वदन्तं नायकं सखी वक्ति । "मम सान्त्वने को गुणः ? अद्य प्रभातपर्यन्तं सा वियोगात् नितरां क्षपितैवासीत् । उषसि कोऽपि काकः गृहस्य पृष्ठे स्थित्वा अरावीत् । काकरुतं प्रियातिथ्यागमनं सूचयतीति प्रतीत्या सा निमेषात्सुपुष्टा अभवत् । तस्याः पोषकाय वायसाय कं वा बलिं दद्मः? नल्लीत्याख्यनरेश्वरस्य राज्ये पृथुगोप्रचारे प्रवर्धितधनुगृहीतघृतपक्व-विशिष्टतण्डुलान्नं सप्तराजतपात्रेषु यदि दीयेत तर्ह्यपि स बलिः लघुरेव स्यादि"ति । कवयः काकमुद्दिश्य प्रशंसारूपेण काव्यानि न रचयन्ति । परं तु काचन स्त्री पद्यमिदं रचितवतीति कारणात् सा काकप्रशंसिका इति संघकाले मानिता । गोप्रचारविभागे । वसन्ततिलका वृत्तम् ।

**132. The friend to the boy who was surprised at seeing the healthy radiance of the girl after a long separation :**

It sounds mean, it will not suffice –
The feast of rice, the whitest kind
That only grows in the Tondi fields
Cooked with the ghee from the cows tended
By the skilful cowherds of Nalli's woods –
The feast that's proffered in seven silver plates
Would seem poor as a compensation
To the benevolent crow which cawed today
In our backyard, chieftain, thus presaging –
The arrival of a welcome guest.

(Kuruntokai 210)

133. कामोऽनुकंप्यो भजते विनाशं दूये तदर्थं सखि वल्लभस्ते।
रथी निनाद्यम्बुधितीरमेत्य त्वयि त्रपिण्यां विगतो निराशः ॥212॥

सखी कन्यां वक्ति। केनचित्परिश्रमेण दिवासंकेतं परिकल्पितवती सखी। कामिनि आगते तत्पुरतः नितरां लज्जावत्यासीत् कन्या। तस्मात् न किंचिदपि संभोगसुखमन्वभूत् स प्रेमी। निराशः प्रतिनिवृत्तः स्वगृहम्। तस्मात् दुःखेन क्रोधेन च कन्यां सखी उपालभते। आगमनसमये रथस्य शब्दः श्रुतः स्यात् पौरैः। तस्मात् पुर्यां किंवदन्ती प्रसरेदित्यपि सखी सूचयति तृतीयपादेन। समुद्रतीरविभागे। उपजातिः वृत्तम्।

**133. The friend to the girl :**

When the chief of seashore lands
Came driving his chariot high
With the many bells all tinkling
You did not yield yourself
To the ardent lover courting,
But held in check by shyness
You withdrew into a shell :
Discouraged, he departed;
His ardour should be ebbing!
I feel distressed, dear;
This love that should burgeon
Now languishes, may die!

(Kuruntokai 212)

134. अनश्वरं वित्तमुपार्जितुं धवः हरिल्लतागर्भवनाध्वना गतः।
अहं स्खलत्प्रस्फुरदंसकङ्कणा व्यपेतनिद्रा नितरां व्यथाकुला ॥

इयं समाक्रान्तशुचेति नीरदः मयानुकम्प्येत्यविमृश्य निर्दयः।
इतोऽधिकं वर्षितुमेव सज्जितः तडित्सखो मां विनिहन्तुमुद्यतः ॥216॥

नायिका सखीं वक्ति। "धवस्तु वित्तार्जनार्थं विदेशं गतः। अहं व्यपेतनिद्रा व्यथितास्मि। एवं भूते मेघः 'इयं दुःखाक्रान्तानुकम्प्या चे'ति अविमृश्य निर्दयः सन् इतोऽधिकं वर्षितुं तडित्सहायः उद्युक्तोऽस्ति। ध्रुवं मां विनिहन्तुमेव एष एवं करोति" इति। अंसकङ्कणः स्खलति तस्या अङ्गकार्श्यात्। अनश्वरं वित्तम् इति वर्णितम्। आत्मनः धवमुद्दिश्य यः क्रोधः तस्याः संजातः तस्य सूचकः स्यात्। अथवा संघकाले विद्यैवानश्वरं वित्तमिति दृष्ट्वात् विद्यालाभाय गत इत्यपि वक्तुं शक्यते। मरुस्थलीविभागे। वंशस्थवृत्तम्।

**134. The girl to the friend :**

My lord journeys through dense jungles
To acquire the wealth that is not destroyed.
My shoulder clasp, it slips down my arm
My arm that's thinning; I deeply grieve.
It has been raining and I suffer more
But the clouds are ruthless, they do not see
How deeply anguished I have been.
Calling lightning to their aid,
They now plan to send down showers
More of them, in heavier torrents,
To torment me, to destroy me!
For, with my lord not returning,
More of rains will be the death of me!

(Kuruntokai 216)

135. नैवायातः स तु विकसिताः यूथिकाः गोप्रचारे
छागैः साकं छदनकलितचूछत्रिणस्ते प्रयाताः।
दुग्धं दत्त्वा स हि विनिमये मेषपो व्रीहिकामः
तान्येवासौ शिरसि धृतवान् मालतीज़ालकानि ॥221॥

कन्योक्तिः। वर्षाकालस्यारम्भे प्रत्यागमिष्यामि इति उक्त्वा गतो वल्लभः नायातः वर्षाकालस्त्वायातः कन्या शोकाविष्टा गृहाद्बहिर्न गच्छतीति प्रत्ययात् वर्षर्तुर्नायात इत्येनां वञ्चनयानुनेतुं यतते सखी। परं तु कन्या प्रतिवदति "वर्षाकाल एव विकसनशीलानि यूथिकापुष्पाणि शिरसि धृत्वा दुग्धव्रीहिविनिमयार्थमागतं मेषपाल-महमपश्य"मिति। एतदेव तस्याः दुःखकारणमित्यनुमीयते। गोप्रचारविभागे। मन्दाक्रान्ता वृत्तम्।

**135. The girl to the friend who tries to convince her that it is not yet the rainy season :**

He doesn't come! And the mullai blooms!
When the shepherds wielding the hooked stick
Came home driving their sheep in the gloaming
And a youth among them called at ours
To barter milk for a measure of grain,
I saw him decked with mullai buds
In the hair of his head–tiny buds
Still green in their casing, unopened still;
I saw them, dear, the mullai buds,
I saw them today with my own eyes!

(Kuruntokai 221)

136. सखी प्लवं यद्यवलम्बतेऽग्रे बाला तमग्रं यदि चान्तमन्तम्
त्यक्त्वा प्लवं याति सखी यदीयम् स्रोतोबलात्सापि तथैव याति ॥

प्रावृड्जलार्द्राङ्कुरपेशलेयं यदक्षियुग्मं जलमुक्प्रशीतम् ।
वर्षासु रक्तोत्पलरङ्गरेखासमङ्कितं दृष्टिमनोभिरामम् ॥222॥

वल्लभः आत्मगतम् वक्ति। नायिकामभिलषति नितरां वल्लभः परं तु सा कामपराङ्मुखा दृश्यते। सख्यामत्यन्तप्रेमिणीयं, सखी यद् कर्म यथा करोति तदेव तामनुसृत्य करोति। नदीस्नाने एतदनुसरणं दृष्ट्वा "इमां सखीमेव प्रार्थ्य तस्याः प्रसादं लब्ध्वातः परं नायिकाया अनुग्रहमधिगच्छामि" इति नायकः चिन्तयति। द्वितीयपद्यं नायिकायाः स्वरूपवर्णनात्मकम्। पर्वतविभागे। उपजातिः वृत्तम्।

**136. The boy at a very early stage of the romance, to himself making up his mind to seek the goodwill of the friend of the girl for help in his courting :**

If the friend starts swimming by catching hold
Of the top of the float, she follows suit.
If the friend takes up the bottom of the float
She too moves to seize that end.
If the friend decides to let go the float
And swim with the current, she might follow her!
What a friendship and what dependence
This girl I love has towards her –
This girl I love that's tender as a shoot
With eyes that are shot with delicate veins
Red like the pithi that blossoms with the rains!

(Kuruntokai 222)

137. मनोवपुःक्लेशकृतायताध्वना गतस्य तां निष्ठुरतां पुनः पुनः।
विलुठ्य चित्ते न हि शक्नुयां सखि मनागपि स्वप्तुमतो महत्तरम् ॥

विलोक्य धेनुं पतितां प्रह्वौ निशि यथैव मूकोऽनुभवेद्व्यथां तथा।
शुचा समाक्रान्तमनःस्थितिं तव प्रदृश्य यद्दुःखमहं बिभर्मि तत् ॥224॥

नायिका सखीं वक्ति। "मनसः देहस्य च क्लेशकृता मार्गेण गतस्य प्रियस्य पत्युर्निष्ठुरतां मम चित्ते विलुठ्य पुनः पुनश्चिन्तयन्ती मनागपि स्वप्तुं न शक्नुयाम्। इदं महद्दुःखमेव। परं तु मम शोकं दृष्ट्वा यद्दुःखं त्वमन्तः अनुभवसि बहिरनाविष्कुर्वन्ती तन्महत्तरम् भवति" इति। मरुस्थली विभागे। वंशस्थं वृत्तम्।

**137. The girl to her friend :**

I cannot sleep in my anguished state
Contemplating the cruel deed
Of the chieftain who left, long ago,
For distant lands traversing
Trackless wastes with yam trees growing
Where the wayfarer is subject to
A thousand hardships, But harder far
For me is to bear my friend's sorrow
Like the deaf-mute who has seen with his eyes
The torments suffered by the cow that has fallen
Into the well, I suffer in silence
Agonies beyond bearing.

(Kuruntokai 224)

138. रथी गतो यत्र समुद्रतीरेष्वयोनिवद्धेन रथाङ्गनेम्याः।
धाराकृपाणेन हि गुल्मिनीनां छिन्नोत्पलानां सखि पश्य पङ्क्तिम् ॥227॥

सखीवचनं कन्यां प्रति। संयोगसंकेतमनुसृत्य पूर्वेद्युः कामिनं प्रतीक्षमाणा कन्या केनचित् कारणेन संयोगं नालभत। कामी प्रेमक्षयान्नागतः इति मत्वा दुःखितां तां अनुनयन्ती सखी "पश्य, तेनागतमेव। परं तु तस्यागमः केनापि ग्रामस्त्रिया दृष्टः स्यात्। तस्मात् किंवदन्त्याः भीतः त्वामदृष्ट्वा एव प्रतिनिवृत्तः। तस्य चक्रनेमिधारया कृपाणेनेव छिन्नानि उत्पलानि मार्गे। एषां पङ्क्तिं दृष्ट्वानुनीता भवे"ति वक्ति। समुद्रतीरविभागे। उपजातिः वृत्तम्।

**138. The friend to the girl with the boy listening in, concealed :**

You notice, dear, how
The neidal blooms on the shore
Have been cut as if
A sword has been at work.
Cut by the metal rim
Of the chieftain's chariot
While returning home!

(The girl was perhaps late to the previous day's tryst and the boy had come and gone, disappointed. But the girl was despondent, thinking he had failed her. The next day with the boy listening in, concealed, the friend points to the evidence of his journey in his chariot, the previous day.)

(Kuruntokai 227)

139. पुरा दृष्टौ वीथ्यामुपजनियुतौ हेतुरहितं
यदृच्छासंगत्यां लघुकलहिनौ केशधरणात्।
निरुद्धौ मातृभ्यामपि पुनरिमौ योद्धुमनसौ
त्वया सम्यग्योगो ग्रथितसुमवत् दैव कलितः ॥229

मध्येमरु पथिका वदन्ति। इमे नायकस्य नायिकायाश्च यो ग्रामस्तत्र वसन्ति। ग्रामान्तरं गत्वा मरुस्थलीमार्गेण निवर्तमानाः पित्रोः कोपाद्भीतौ विवाहस्यानुमतिं लब्धु- मशक्नुवानौ नूत्नदम्पतीं दृष्ट्वा सहर्षमेवं वदन्ति। "पुरा एतयोर्बाल्यवयसि वीथ्यां यदृच्छया यदि संगतौ तर्हि हेतुरहितं कलहं कुर्वन्तौ मातृभ्यां निरुद्धावपि पुनर्योद्धुमेवेच्छन्तौ इमावास्ताम्। अधुना तावेव प्रेमबद्धौ पित्रोरनुमतिं विनापि परिणेतुकामौ मरुस्थल्यां गच्छतः। यद्दैव विवाहबन्धेऽधिकृतमस्ति तेन ग्रथितसुमवत् मालायां योगोऽयं निपुणं कलित"इति। मरुस्थलीविभागः। शिखरिणी वृत्तम्।

**139. Wayfarers who see the pair of lovers eloping in mid-desert, to each other :**

It seems it was but yesterday
That when these two, chaperoned
By their doting foster-mothers
Met in the street, he would grab
Locks of her five-fold plaited hair
And she would drag him by the hair
Now could the harassed foster-mothers
Separate the battling young wild cats!
O kindly deity that take care
Of cases of love, how you have
Wreathed like a garland two loving hearts!
Blessed are your machinations,
O dispenser of the tender passion!

(Kuruntokai 229)

140. अधिवसेद्यदि मत्पुरमेव सः मम गृहं न कदाप्युपगच्छति।
अपि यदीह समेत्युरसात्मनः प्रणयिवन्न परिष्वजति प्रियाम् ॥

परपुरस्य परेतभुवं यथा परिहरन्सखि मामपगच्छति।
विगतलज्जमपेतमति प्रियं मम धनुः प्रहितेषुसमं द्रुतम् ॥231॥

नायिका सखीं वक्ति। "यद्ययं मत्पुरमेवाधिवसेत् तर्ह्यपि न कदापि मम गृहमुपगच्छति। यद्यागच्छेन्मे गृहं, प्रणयिनः यथा तथा प्रेम्णा सह न मां परिष्वजति। मनुष्याः यथा नगरान्तरस्य श्मशानं परिहरन्ति तथैव सः मां परिहरन्नपगच्छति। पूर्वं तस्मिन्मया विगतलज्जं अपेतमति अकृतपरिशीलनं प्रेम निबद्धं, तदधुना धनुः प्रेषितबाणवत् विद्रुतं दूरं गतमि"ति। नदीतीरविभागे। द्रुतविलम्बितं वृत्तम्।

**140. The girl to the friend who pleads to forgive and accept back the straying husband :**

Even on the days he stays in my town
He would not be seen in the street where I live.
Even on that rare occasion when
He turns up in the street, he would not deign
To hold me tight in warm embrace.
He avoids me as people would
The burning ghat of an alien village
My love for him has speeded away
To a far distance even like an arrow
Shot from a bow – my love, my dearest,
That had lost all its sense of shame
Lost even basic common sense
And discernment!

(Kuruntokai 231)

141. पल्लीं वर्जय शीतलानिल चिरंजीव प्रियाया मम
खादन्त्यामलकानि यत्र हरिणाश्शष्पोटजानां पुरः।
यत्संस्था गिरिनिर्झरस्य निकटे शुभ्रस्य निर्मोकवत्
उत्तुङ्गाद्रिकृतस्थितिं मम कृते तां वर्जयित्वा वह ॥235॥

कामी उत्तरानिलं प्रार्थयते। "हि शिशिरानिल, वियुक्तानां व्यथामुत्पादयसि त्वम्। तत् सा व्यथा मम दुस्सहा। परं तु मत्कामिन्याबलया नैतत् साध्यम्। तस्मात् तस्याः पल्लीं, ग्रामं, वर्जयित्वा प्रदेशान्तरे वाहि। तस्याः पल्ली निर्मोकवत् सर्पत्वग्यथा, शुभ्रा तथाभूतस्य गिरिनिर्झरस्य निकटे वर्तते, तत्र शष्पोटजानां पुरतः हरिणाः आमलकानि खादन्ति, तत् सुष्ठु विलोक्य तत्स्थानं वर्जयित्वा अन्यत्र प्रसरे"ति। मरुस्थलीविभागे। शार्दूलविक्रीडितं वृत्तम्।

**141. The boy addressing the cold north wind, in effect tells the charioteer to speed up the vehicle :**

North wind! My girl's village lies
On the top of the hill where waterfalls
Appear white like the skin discarded
By a snake and left to hang.
Beside the frontal porch of the houses
Mountain cattle feed on the berries
Of the nelli tree – the houses roofed
By thatches of dried grass set together,
That's the village of the goodly lass:
Avoid it, please, with all the restraint
You can muster! Don't blow there!

(Kuruntokai 235)

142. श्यामं धानाघातकर्मप्रयोज्यं पक्वं नीत्वायोग्रमाक्रीडनाय।
तोण्डीपुर्यां कन्यकास्तन्निवेश्य शालिक्षेत्रे सीम्नि केलिप्रसक्ताः ॥

यत्सौन्दर्यं मुख्य पुर्यास्तदाभां शोभां सख्याः संगृहीतां समग्राम्।
दत्त्वा तस्यै यत्रकुत्रापि गच्छ शापं शप्तं सन्निधौ नौ गृहीत्वा ॥238॥

सखी नायकं वक्ति। "तोण्डीपुर्यां कन्यकाः धानाकरणे उपयोज्यमयोग्रं श्यामवर्णं गृहीत्वा शालिक्षेत्रे सीम्नि निवेश्य क्रीडन्ते। तस्याः पुर्याः यत्सौन्दर्यं तदाभां नायिकायाः शोभां समग्रां त्वम् अपहृतवान् पूर्वकाले। तां दत्त्वा तस्यै यः शापः शप्तः आवयोः सन्निधौ तं गृहीत्वा यत्र कुत्रापि गच्छ। गृहमिमं मा प्रविशे"ति। नायकः पण्यस्त्रीसंपर्कं कृत्वा ततः आगत्य गृहप्रवेशायानुमतिं याचते। तं निराकृत्यैवं भाषते सखी।

**142. The friend of the girl to the young man returning from the homes of prostitutes and trying to secure admission by making oaths :**

You give us back
Our femine graces
And take away
Your many oaths –
Our graces, chief
Of riverine plains,
That resemble
The city of Thondi
Where handsome girls
With comely bangles
Play mirthful games
By placing the pestle
Used to pound
Rice into flakes,
On the bund
In the paddy fields!

(Kuruntokai 238)

143. सच्छिद्रकन्दरगिरौ कुसुमस्य गुच्छात् विस्तारयत्यनिलसंचलितात्समग्रम् ।
गन्धं रसन्मधुकरो मकरन्दपाने रम्यो भुजङ्गमुखवान्तमणिर्यथैव ॥
वंशावलिर्भवनवारणतामुपैति यस्याचले सखि कृते परमस्य तस्य ।
स्रंसन्ति हस्तवलयानि भुजौ कृशौ
मे लज्जा परं मम कुतोऽस्ति विसर्जनाय ॥239॥

नायिका सखीं वक्ति । "पर्वततटेषु मधुकरः शब्दयन् वायुचलितात्पुष्पगुच्छात् गन्धं प्रसारयति । स भृङ्गःपुष्पे स्थितः भुजङ्गमुखवान्तमणिरिव दृश्यते । तस्य मुख्यस्याचले वंशावलिः कीचकावलिरेव भवनानां वारणतामुपैति । तस्य कृते हस्तवलयानि मे हस्तात्स्रंसन्ति स्खलन्ति भुजौ च कार्श्यमुपगतौ । एतस्यां स्थितौ सखि, मे विसर्जनाय लज्जा कुतोऽस्ति? लज्जा पुरैव तिरस्कृते"ति । "यथा पुष्पगन्धः पर्वततटेषु प्रसारितस्य-थैवावयोः संगममुद्दिश्य किंवदन्ती प्रसारिता । मम देहे च कामलक्षणानि संजातानि । अस्यां थितौ लज्जायां पूर्वमेव विसृष्टायां विवाहार्थः यः प्रयत्नः स एवं वल्लभेना-धुना कर्तव्य" इत्येव तस्याः सूचना धवाय । पर्वतविभागे । वसन्ततिलका वृत्तम् ।

**143. The girl to the friend, with the boy, listening in, concealed :**

In his hill, the bee imbibes
The pollen, finely scented, found
In the newly blossomed kantal flower
Spreading its bouquet over the slope
Deep with cracks and gaping fissures,
The bee on the flower looking rather like
The precious stone spit out by a snake.
To him, to the chief of mountain slopes
My heart has gone out and I stand
Debilitated, my clasps get loosened,
My shoulders have lost their rounded shape.
Nothing is left in me, my dear,
Not even the quality of bashfulness
For me to forsake! I'm in a plight!

(Kuruntokai 239)

144. गुल्मेषु वर्षशीतेषु वर्धन्ते शिम्बिकालताः।
शुकनासनिभान्यासु भान्ति पुष्पाण्यनेकशः ॥
तेषां च निकटे जातीसुमानि विकचान्युत।
वन्यमार्जारदन्तानां साम्यगामीनि रूपतः ॥
एतेषां धातुमानीय पवनो वाति शीतलः।
सखि पश्य ममार्ताया इतोप्यधिकदुःखकृत् ॥
इन्द्रनीलनिभस्तस्य गिरिरस्तमिते रवौ।
नौरिवाम्भोनिधौ दृष्टेर्यात्यगोचरतां मम ॥240॥

नायिका सखीं वक्ति। शिम्बिकादिपुष्पविकसनं शिशिरर्तोरागमनसूचकम्। वर्षाकालस्यारम्भ एवागमिष्यामीति प्रतिज्ञाय यातो वल्लभः तदृतोरनन्तरं शिशिरस्यारम्भेऽपि नायातः। इमानि शिशिरर्तुसूचकानि कुसुमानि नायिकायाः दुःखवर्धकानि। परं तु वल्लभस्य गिरिं पश्यन्ती किंचिदिव सान्त्वितासीत् पूर्वम्। अधुना सायंकालस्यान्ते स गिरिरपि समुद्रे नौरिव दृष्टिगोचरतामतिगच्छति। इदमेव महद्दुःखमस्याः। गोप्रचारविभागे। अनुष्टुप् छन्दः ॥

**144. The girl to the friend :**

Creepers winding round the bushes
With drops of cold rain bring forth flowers
That look like the curved beaks of parrots.
Near them blossom the mullai flowers
That resemble the wild cat's teeth.
The bitter cold wind carrying
The pollen from them, constant, blows.
They all add to my anguish, dear
But, as the sun has begun to set,
My lord's hillock, blue as a gem,
Even like a ship that ploughs the sea
Is vanishing from my field of vision.
That is the hardest thing for me
To bear, my dear, in my present state!

(Kuruntokai 240)

145. सप्रेमस्वरकुक्कुटस्य विपिने यत्रैव जातीस्फुटे
ग्रीवां सुन्दरबिन्दुभिः परिगतां सिञ्चन्ति गुल्माल्लवाः।
जामाता तव वर्ततेऽल्पनगरे तत्स्यन्दनस्यानिशं
गन्तव्येऽपि पुरान्तरे नृपकृते कुत्रापि नावस्थितिः ॥242॥

धात्री मातरं वक्ति। विवाहानन्तरं नगरान्तरं गताभ्यां दुहितृजामातृभ्यां न कापि वृत्तिर्लब्धा। तस्मात् तौ सुखिनौ वा, स्वदुहितरि जामाता प्रेमीवेति धात्री विज्ञातुकामा तयोर्नगरं गत्वा कतिपयदिनेषु निवृत्ता। 'किं वा विज्ञातं त्वयास्मिन्नल्पीयसि काले' इति पृच्छन्ती मातरं वक्ति। "यत्र जातीकुसुमानि विकचानि तत्र गुल्मेभ्यः जललवाः सप्रेमस्वरवतः कुक्कुटस्य सुन्दरबिन्दुभिः परिगतां ग्रीवां क्लेदयन्ति। एतादृशं अल्पजनोषितं मनोविनोदनार्थं न बहुभिः साधनैरुपेतं तयोर्नगरम्। जामाता राजकार्याणि कर्तुं बहुधा नगरान्तरं गच्छति। परं तु नैकदा स नगरान्तरे रात्रौ विरमति। महदपि कर्म रात्र्यागमात्पूर्वमेव पूर्णतः कृत्वा स्वपुरं निवर्तते" इति। इतरमनोविनोदनसाधनाभावे को वा हेतुः स्यादस्य शीघ्रनिवर्तने? नवोढायाः भार्यायाः आकर्षणशक्तिरेवात्र हेतुः स्यात्। गोप्रचारविभागे। शार्दूलविक्रीडितम् वृत्तम्।

**145. The foster-mother tells the natal mother :**

The village, where she lives, is small
Set in the meadows where drops of rain
Fall on the speckled neck of the cock
(The jungle fowl with the strident call)
A tiny village bereft of glamour,
Yet her husband, if he has to travel
At the behest of the king of the realm
So goes about his royal business
That his chariot is never known
To have been lodged overnight
In an alien stable away from home!

(Kuruntokai 242)

146. निशि प्रसुप्ते निखिले हि लोक ओजस्विहस्तीव समागतस्त्वम्।
द्वारः समुद्घाटनयत्नजातः शब्दः श्रुतो नेति न शैलमुख्य ॥

केकी यथा जालनिबन्धहेतोः शिखासुपर्णोन्मथनाद्विषण्णः।
श्रुतस्वना सुव्यथिता यदेयं धात्री तदालिङ्गति निष्ठुरैनाम् ॥244॥

सखी वल्लभं वक्ति। पूर्वस्यां रात्रौ संकेतानुसारं स आगतः परं तु कामिनीम-पश्यन् दुःखितः गृहान् न्यवर्तत। अद्यापि संकेतानुसारमागतं तमनुनयपूर्वकमेवं वदति सखी। "ह्यः तवागमनं, द्वारोद्घाटनयत्नः इति सर्वं ज्ञातमेवाभ्याम्। परं तु यथा जालनिबद्धः मयूरः जालस्य संकुचितावकाशत्वात् शिखासुपर्णोन्मथनाद्विषण्णो भवति तथैव तव कामिनी धात्र्या निष्ठुरया गाढमालिङ्गिता निद्रायाम्। तस्मादेव हेतोः तया नागतमि"ति। पर्वतविभागे। उपजातिः वृत्तम्।

**146. The friend of the girl to the boy who had been disappointed at the girl's failure to meet him at the previous night's tryst :**

You came, chieftain like a mighty elephant
In the middle of the night when all were asleep
And tried the door. It's not that we were
Unaware of your coming; we knew it well.
But like a peacock caught in a snare
With its crest messed up and feathers disarrayed,
She was tightly held in embrace by
The ruthless mother; she couldn't escape!
She felt anguished that she couldn't go
To fulfil the nightly tryst with you!

(Kuruntokai 244)

147. यत्पर्णं क्रकचोपमं च पृथुलं तत्केतकीसंभृता
पर्यायेण निखातशूलततिवत् यस्याब्धितीरे वृतिः ।
क्रौर्यं तस्य यदि प्रकाशमयते तच्छोचनीयं परं
पारे वारिनिधेर्विनष्टविभवादालिस्तुतान्मे सखि ॥245॥

नायिका सखीं वक्ति। 'केतकीपत्राणि क्रकचोपमानि। तासां केतकीनां ततिः निखातशूलततिवत् तस्य मुख्यस्य समुद्रतीरे वृतित्वं भजते। यदि तेन मम विषये यत्क्रौर्यं आचरितं तत् प्रकाशमयते सर्वैर्विज्ञातं भवति, तर्हि तत् सखीभिः प्रशस्तात् धवार्थं विनष्टात् मम स्त्रैणविभवात् परं शोचनीयं स्यादि'ति। स्त्रीणां स्त्रैणत्वनाशः दुःखतमः मन्यते। परं तु तस्मादपि शोचनीयं धवस्याचरणप्रकटीकरणमिति तस्या अभिप्रायः स्वस्मिन् अनादरकृतोऽपि वल्लभस्य न कश्चित्कलङ्कः समुत्पद्यतामिति तस्या मनस उत्कृष्टतां सूचयति। समुद्रतीरविभागे। शार्दूलविक्रीडितं वृत्तम्।

**147. The girl to her friend :**

My graceful beauty lauded by
The bevy of girls that play on the shore
Is now lost. But more distasteful
Than its loss will be the wide
Exposure of the evil wrought
By the chieftain of seashore lands
Where the thalai with its saw-like leaves
Rich, verdant, grows like a fencing
Of planted javelins; this exposure
Will be far more hateful, if such happens!

(Kuruntokai 245)

148. षण्डेषु केकिनिवहः कुरुते निनादं श्वेताननाः सशिशवः कपयः सकंपाः।
यस्मिन् तमद्रिमुदकोक्षितमालि दृष्ट्वा तन्मे ललाटमवलोकय लब्धरागम् ॥249॥

कन्योक्तिः सखीं प्रति। वर्षाकाले प्रत्यागमिष्यामीति प्रतिज्ञाय गतः प्रेमी काले नायातः। परं तु तस्मिन् बद्धभावा दयितेयं न तावत् दुःखाक्रान्तेति विज्ञाय सखी कथमिदमिति तां पृच्छति। सा प्रतिवक्ति "तस्य प्रेमिणः पर्वते पर्जन्योक्षिते मयूराः प्रमोदेन कोलाहलं कुर्वन्ति, श्वेतमुखाः कपयः स्वशिशुभिः सह शीतेन कम्पन्ते। तमद्रिं दृष्ट्वा प्रेमिणं संप्राप्तेव मुदितास्मि, मम विवर्णमपि ललाटं पुनः पूर्ववर्णं प्राप्तवत्। तत् पश्ये"ति। पर्वतविभागे। वसन्ततिलका वृत्तम्।

**148. The girl to the friend :**

I gazed intently at the hill
In the land of the chief where it has rained
Spurring flocks of peacocks to frisk,
And celebrate while the white-faced monkey
Quakes with the cold in the company
Of its offspring. I gazed, my dear
Intently and for long at his hill
And presto! my forehead has regained now
The sheen as of old; you take a look!

(Kuruntokai 249)

149. शिष्टं तोयं स्रवति जलदः पूर्वसंवत्सरस्य
नूत्नं नीरं ह्युचितसमये वर्षितुं नेङ्गितज्ञः।
नृत्यं वर्षैर्मुदिताशिखिनां श्वेतपुष्पोद्गमं च
दृष्ट्वा मा गाः सखि शुचमिदं प्रावृषेण्यं न वर्षम् ॥251॥

सखी कामिनीं वक्ति। "वर्षाकालप्रारम्भ एवागमिष्यामीति तस्यै प्रतिज्ञाय गतोऽयं प्रेमी नागतः। परं तु वर्षाकाल आयातः। वर्षं दृष्ट्वा कामिनी दुःखभूयिष्ठा। तां सान्त्वयितुमेवं युक्तिवादं करोति सखी। पूर्वसंवत्सर एव वर्षितव्यं परं तु परिशिष्टमासीत् किंचिज्जलं मेघे। तत् वर्षित्वानन्तरं नूतनं तोयं नवसंवत्सरे गृह्णामीति निश्चित्याधुना वर्षति जलदः। इदं तु न प्रावृषेण्यं वर्षम्। वर्षाकालः न प्रारब्धः। तस्माद्दुःखं त्यजे"ति। शिखिनस्तु जडाः पूर्वसंवत्सरस्य शिष्टं वर्षमाधुनिकसंवत्सरस्येति मत्वा कोलाहलं कुर्वन्ति, 'पिडा' इत्याख्यश्वेतपुष्पमपि विकसितमि'ति मिथ्यावादं करोति समयोचितवादिनी सखी। गोप्रचारविभागे। मन्दाक्रान्ता वृत्तम्।

**149. The friend to the girl who had become agitated at the rains coming down and no sign of the lover :**

Flocks of peacocks in the woods
Mistaking the casual rains
To be the proper seasonal showers
Have started cackling in celebration.
The pida, too, is in the fullest bloom
Under the self-same impression.
This is not the rainy season,
So still your grieving heart, my dear!
These foolish things – the birds and the plants
Have been misled by the clouds
Releasing the pent-up rains.
Of the season gone-by in order that
They may take in fresh stocks of water!

(Kuruntokai 251)

150. मूढां वक्षि ममायतौ च पृथुलावंसौ कृशीकुर्वतः
स्कन्धाद्भ्रंशयतो मणिद्वयमतः कान्तस्य शैलेशिनः।
प्रत्यायात इति प्रसन्नवदनां तस्यागमे निश्शुचां
दुश्चेष्टस्य सभाजनं कृतवतीं चारित्र्यसंरक्षिणीम् ॥

कोपं सन्त्यज मत्सखि प्रियतमे मच्चेष्टितं हेतुमल्-
लोके सन्मतियोजिताः परजनैः संशस्यमाना अपि।
लज्जन्ते नितरामियं प्रकृतिरित्येवंस्थिते स्वात्मनः
दुर्वृत्ते वहिरङ्गतः कथमिमे मर्षन्ति मद्व्याहृते ॥252॥

नायिका सखीं वक्ति। पण्यस्त्रीसंयोगानन्तरं गृहमायातं पतिं प्रेम्णा विनादूषणं सत्कृतवतीं यदा चेटी पृच्छति साश्चर्यं तदोत्तरद्वारा वक्तीदम्। "तस्य सभाजनं यन्मया कृतं तन्न मौढ्यसूचकम्। सज्जनानां प्रकृतिरेषा, इतरैः श्लाघिता अपि ते लज्जन्ते। इतरैर्विशिष्य मया तस्य दुर्वृत्ते सर्वेषां पुरतः व्याहृते सति कथं वा तन्मर्षति इत्यालोच्य मया कृतं सभाजन"मिति। संघकालीनस्त्रीणां गुणोत्कर्षं प्रकटीकरोति पद्ययुग्ममिदम्। नदीतीरविभागे। शार्दूलविक्रीडितम् वृत्तम्।

**150. The girl to the friend :**

Dear, you have been expostulating
With me on my conduct,
You complain that when the chief of hills,
The ruthless loosener
Of the rounded, well formed golden clasps
Worn around my shoulders
Returned home, I welcomed him
With a sweet and beaming face
Dictated by chastity, a rare and godly virtue,
That I am a fool to forgive him :
Please do not take on so!
People of breeding, of a noble mien
Blush when praised to the face.
How can they bear accusations
Hurled openly at them?

(Kuruntokai 252)

151. पश्याम्बरे श्यामतरे डयन्ते उच्चैः सखि श्वेततमा बलाकाः।
भृङ्गैः परागार्थिभिरद्य गुल्मेष्वपाव्रियन्ते कुसुमानि विष्वक् ॥

पृथुत्वलाभात्तव चांसयुग्मे विभूषणानि स्थिरतां प्रयान्ति।
मरुं गतः शुष्कमपेतनीरम् शीघ्रं निवर्तेत धवस्तवालि ॥
तुण्डीरराजस्य रथेभयुक्तस्याद्रेस्तटे शात्रवदेशभोक्तुः।
छायार्थिनी यत्र विपत्रवृक्षम् खिन्ना श्रयेद्वत्सविहीनधेनुः ॥260॥

शुभनिमित्तानि दृष्ट्वा सखी नायिकां वक्ति। श्वेताः बलाकाः अम्बरे डयन्ते श्यामरङ्गे। भृङ्गाणां व्यापारेण पुष्पाणि विकसन्ति। तव भुजयोरपि पुष्टिलाभात् भूषणानि न स्खलन्ति। एतेभ्यः शुभसूचकेभ्यः तव वल्लभस्य शीघ्रमेवागमनं भविष्यतीति सुदृढम्। तृतीये पद्ये धवो यत्र गतः स देशः वर्ण्यते। तुण्डीराख्यदेशनृपस्य रथगजादि-युक्तस्य शत्रूणां देशान् विजित्य तेषां भोक्तुः पर्वतस्य तटे वत्सविहीनधेनुः छायार्थिनी सूर्यरश्मीनामत्युष्णत्वात् शुष्कपतितपत्रस्य वृक्षस्याल्पच्छायायां खिन्ना सती तिष्ठतीति वर्णनात् मरुस्थल्याः क्रौर्यं निर्दिष्टम्। तत्प्रदेशात् तव सकाशं स धवः शीघ्रमायास्यती'ति। मरुस्थलीविभागे। प्रथमस्य द्वितीयस्य चोपजातिः वृत्तं, तृतीयस्येन्द्रवज्रा।

**151. The friend to the girl :**

The cranes fly high
In the darkening sky
The flowering shrubs
With the bees blowing,
Open their petals.
The shoulders thin
That wear jewels
Made of conchs
Get nourished to grow
To the size of the jewels,
The chief shall come
Any time now
Crossing the wastes
Where the frail omai
Beckons to its shade
The calfless cow –
The wastes on the slopes
Ruled by the clan
Of Tondaimans
Whose leading tuskers
And powerful chariots
Annexe the lands
Of enemy kings.
The chief shall be here
The soonest, dear!
The signs are good!

(Kuruntokai 260)

152. गर्जन्नीरदपोषितस्य तटयोर्वन्यप्रवाहस्य यद्
देशे चारुतया चरन्विलसितोज्जृम्भिस्वपिच्छः शनैः।
नृत्यत्केकिगणः करोति तुमुलं बन्धस्तु तेनेप्सितः
गच्छन्त्यां मयि पाण्डुतामपि गतश्रीत्वं न संपद्यते ॥264॥

"त्वया वियोगदुःखं न सह्यत" इति ब्रुवतीं सखीं नायिका वक्ति। "तस्य देशे जलदपोषितवन्यस्रोतसस्तटयोर्नृत्यत्केकिगणः विलसितोज्जृम्भितस्वपिच्छश्चरन् तुमुलं करोति, मेघगर्जनश्रवणोद्भूतमुदा। आवयोर्यः प्रेमबन्धः स तेनैवेप्सितः। वियोगादहं पाण्डुतां गतापि गतश्रीर्न भवामि। इदं दुःखं सोढुं शक्तैवे"ति। पर्वतविभागे। शार्दूलविक्रीडितं वृत्तम्।

**152. The girl to the friend :**

The clouds on his hill bark out thunder
And rain to their hearts' content
The mountain stream with swollen floods
Roars down the mountain slopes.
The peacocks proudly displaying
Their lovely array of feathers
Strut with slow and studied grace,
Filling the air with cries.
This love, this bondage that binds us both
Is one of his own choosing!
He is away and I may pine
And pallor may spread apace.
But never shall I, my dearest, lose
My comely feminine grace.

(Kuruntokai 264)

153. न चेत्स्ववार्ताहरणाय कश्चिन्मदन्तिकं तत्प्रहितश्चिराय।
कथं पुरा रात्रिषु मां प्रतीक्ष्य शुचा परं व्याकुलिना चिरेण ॥
सख्यं स्थिरं स्वादु गतः सहायः गृहस्य पक्षेरुहपादपो यः।
तस्मै चिराय प्रहितो न तेन वियोगदक्षेण विहङ्गदूतः ॥266॥

नायिका सखीं वक्ति। "वल्लभः स्वप्रवृत्तिहरं कमपि दूतं महता कालेन न मे प्रेषितवान्। मयि तस्मिन्ननादरे तस्य साहाय्यकृते प्रतिरात्रि मत्प्रतीक्षासमये समानदुःखाय एकसुहृदे गृहपक्षस्थतरवेऽपि कश्चिद्विहङ्गदूतः वियोगदक्षेण तेन कथं न प्रहितः?" इति। अत्र तस्य आधुनिकानादरेण दुःखिता किंचित्क्रुद्धा च नायिका अनुरागारम्भे स तस्याः संगमार्थं बह्वीः रात्रीः तत्प्रतीक्षां कुर्वन्नासीत् इति चिन्तयति। पर्वतविभागे। प्रथमस्योपेन्द्रवज्रा द्वितीयस्योपजातिः छन्दसी।

**153. The girl to her friend :**

If he does not deign
To communicate with me
Why does he fail to send
A winged messenger,
(The expert at the art
Of leaving his love behind)
To the vengai tree that stands
On a wing of our house, my dear,
His stoutest comrade sweet
Through all these lonesome nights?

(Kuruntokai 266)

154. शिरः फणायुक्तमुरंगमाणां छिनत्ति यत्राशनिरर्धरात्रौ।
अयुक्तमित्येव न चिन्तयन्यः आगत्य वंशाभ्युगांसभोगम् ॥

प्रेम्णा करोत्यत्र कथं तमीशं पृच्छाव साक्षात्प्रतियान्तमालि।
"विहाय मां यास्यसि किं, पुनस्त्वम् आयासि किं वे"ति न शक्नुयाव ॥268॥

नायके तिरोभूते निकटस्थगुल्मेषु, सखी नायिकां वक्ति। "रात्रौ नितरां भयङ्करे सापाये मार्गे वल्लभ आयाति। तत्राशनिपातः भुजङ्गानां शिरांसि छिनत्ति। एतावति मार्गे आगम्य सः तव वंशनिभौ भुजौ प्रेम्णा भुङ्क्ते। भोगानन्तरं प्रतिनिवर्तमानं तं साक्षात्, तस्य पुरः कथं पृच्छसि त्वं, 'मां विहायाद्य गच्छसि, श्वः पुनरायासि वे'ति। एवं तं प्रष्टुं त्वं न शक्नोषि। किं कुर्व" इति। मार्गस्य सापायत्वात् नायिका रात्रिसंकेतं न वाञ्छति। दिवासंकेतस्त्वचिन्त्यः। तस्मात् वल्लभः विवाहार्थयत्नान् करोतु इति तं चोदयितुमेवायं वार्तालापः। पर्वतविभागे। उपजातिः वृत्तम्।

**154. The girl to the friend :**

This is the endless conflict raging in my mind :
When he and I in the tryst meet and soul to soul unite
We dissolve in timeless bliss. But O! how fleet is time
How the blissful moments fly! For all too soon he finds
It's time for him to go. My loving heart, my dear
Is all clamour to bid him come to be with me
The next and every night. But then my fitful mind
Recalls in all their horror the nameless terrors
Of the forest path he has to tread, not while the moon
Lights up the path but emerging when the darkest clouds
Quite conceal it - the path untrodden where snakes abound
Whose poison hoods are trampled on by the tiger on the prowl
And I dread his fearsome journey braving all this danger
To be with me – but can I urge my lips to say,
'Do not, dearest, brave the terrors that stalk the jungle path
Do not come of nights!' My dear, how in the world can I
Shape my lips to speak such loveless words to him?
This then, my conflict : I cannot beseech him to come
Braving nightly terrors : but then, you know, I keep alive
Through the endless day with dreams of union
In secret nightly tryst.
(Kuruntokai 268)

155. नीरस्य पात इव दिक्षु विसार्य बिन्दून् स्रोतोवहो रसति यत्र रयः प्रवृद्धेः।
तद्देशमुख्यकृतबान्धवमेकवारं बहूहमंसकृशतालि गदोदयेन ॥271॥

नायिका सखीं वक्ति। "यस्य देशे जलपात इव दिक्षु जलबिन्दून् प्रसार्य रयःप्रवृद्धेः हेतोः स्रोतोवहः रसति शब्दयति, तेन बान्धवमेकदिनमेव मया कृतम्। परं तु मेंसौ कृशौ कुर्वन् कामरोगः बहुदिनानि मां क्लेशयति। चित्रमेतत्" इति। कामस्यारम्भे महद्दुःखमनुभवति कामिनी स्रोतोवहो निर्झरः यथोत्पत्तिसमये महान्तं शब्दं कुर्वन् जलबिन्दून् दिक्षु प्रसारयन् रभसा गच्छति। कामस्य स्रोतोवहेनोपमा। पर्वतविभागे। वसन्ततिलका वृत्तम्।

**155. The girl to her friend :**

In his hilly country the river runs
Throwing water-drops about
Like water-falls with a thund'rous noise
On account of the speed it gains;
I saw him once, but once, in truth.
My loving friend; but the fell sickness
That the friendship gave me has worn my shoulders
Emaciate over so long a time!

(Kuruntokai 271)

156. गृहीत्वा भ्रातरस्तस्याः मृगयाकुशला धनुः ।
शीशूशब्दं बहुधा कृत्वा हरिणानां महद्गणम् ॥
विद्राव्योपलपातेन तेष्वेकस्य च वाजिनः ।
पश्यन्त्या एव तत्सख्याः शरं मर्मण्यपातयन् ॥

सरक्तं भ्रातृभिः सद्यः निरवातः शर उद्धृतः ।
गिरिजालोचने तूर्णं रुधिराक्तशरोपमे ॥
सुगन्धिः कुन्तलस्तस्या आयतः श्यामसुन्दरः ।
पुनरालिङ्गनं तस्याः साध्यते किं मयांसयोः ॥272॥

नायकः सखायं वक्ति । 'महितस्य तव सा बाला कथं दुर्लभा स्यादि'ति पृच्छन्तं सखायमेवं वक्ति । ''तस्याः भ्रातरः क्रूरचित्ताः । इतरेषां दुःखं दृष्ट्वा ते न दयन्ते, एष तेषां स्वभावः । मृग्याः पश्यन्त्या एव ते मृगं बाणेन ताडयन्ति, मर्मभागे निखातं शल्यं निर्दयं उद्धरन्ति च । तेषां, तस्याः पितुश्चानुमतिं कथं वा लभेये'' ति । श्लोकानामर्थः सुगमः । नायिकायाः रक्तनयनयोरुपमानार्थं न केवलं मृगया वर्णिता । परं तु तस्याः भ्रातृणां चित्तक्रौर्यं विशदीकर्तुमेवेदं वर्णनं कृतम् । पर्वतविभागे । अनुष्टुप् ।

**156. The boy to his friend critical of his hesitant ways :**

You think it is easy for me to wed her
How wrong you are! For I dread to touch her
In the secret tryst to which we go
With palpitating heart. Her brothers
When on their hunt, they see a deer
Draw red blood by pelting stones,
They segregate it from the rest of the herd,
Give it hot chase without respite
Its mate distracted keeping close
To her lord in the hour of its direst peril;
And when they come within striking distance
They bend their bow and speed an arrow
With a terrific bang; it strikes the deer
In its genitals; the luckless victim

Falls to the ground; her brothers pluck
The lethal arrow smeared with blood
Without a thought of the blinding pain.
Caused to the stag in its dying moments
And the mental torture of the faithful doe
Such are her kinsmen, how can I hope
For a happy sequel? Indeed, my friend
How does this incipient, hesitant love
Get started on its stormy course?
You counsel confidence; how dare I hope
For the hand of the girl from the pitiless clan?
How dare I hope she will entertain
The tender passion? And if she does
How do I seek her hand in marriage
From her sadist kinsmen athirst for blood?

(Kuruntokai 272)

157. वपुर्युवत्यास्तनुपेशलं प्रिय यया निबद्धं मम चित्तमात्मनि।
दिनैकभोगाय लभेय तर्हि मे दिनार्धमप्यायुरतो न वाञ्छितम् ॥280॥

नायकः सखायं वक्ति। "हे प्रियसुहृद् तस्याः युवत्याः वपुस्तनुपेशलमस्ति। मम चित्तं तया स्वात्मनि प्रेम्णा निबद्धमस्ति। तस्मात् त्वया कृतेन तस्याः दूषणेनालम्। तां यद्यहं दिनैकभोगाय लभेय तर्हि तेन भोगेन तृप्तः स्याम्, अतः परं दिनार्धमप्यायुः मया न वाञ्छितं स्यादि"ति। युवत्यास्तस्या एकदिनसंयोग एव नायकस्य जीवितलक्ष्यं संभूतमिति भावः। पर्वतविभागे। वंशस्थं वृत्तम्।

**157. The boy to his friend :**

She is blessed with shoulders
That are big and round and plump,
Her bosom, soft and tender.
If I can have the girl
Who has fastened my heart
On to her own, friend,
Even for the space of a day,
I do not care to live
For half a day thereafter!

(Kuruntokai 280)

158. पूर्वैरार्जितमर्थमुत्सृजति तं नोपार्जयन्यः स्वतः
संपन्नं न बुधा वदन्ति पुरुषं लोके सखि प्रायशः।
हीनोऽर्थेन तु याचकादपि भुवि प्राप्नोत्यगंभीरतां
एतत्सत्यमुदाहरन्स्वकृतिभिः प्रेमी प्रवासं गतः ॥

शुष्के वर्त्मनि शूलिभिर्गतघृणैर्व्याधैः कृतान्तोपमैः
तीक्ष्णं वीक्षितवद्भिरध्वगगतिं व्यापादितानां नृणाम्।
पुञ्जीभूतशवान् प्रतीक्ष्य बहवो गृध्राः क्षुधार्ताः स्थिताः
दीर्घे निःसलिले विशुष्कविटपे कान्तश्चिरं जीवतु ॥283॥

नायिका सखीं वक्ति। "यः स्वयमकृतयत्नः पूर्वैरार्जितं धनं व्ययीकरोति तं बुधाः संपन्नं धनिनं न वदन्ति। अर्थहीनस्तु लोके याचकादपि अगंभीरतां प्राप्नोति अवमानमनुभवति। तस्माद्धेतोः स मम प्रियः धनसंपादनार्थं देशान्तरं गतः। केन मार्गेण? मरुस्थलीमार्गेण गतः यस्मिन् क्रूरचित्तैर्व्याधैः सशूलैः हतान् पथिकान् पुञ्जीभूतान् भक्षितुं गृध्राः प्रतीक्षन्ते। स मे कान्तः चिरं जीवतु मया विने"ति। यौवनं कामं चानादृत्य धनार्थं पत्नीं विहाय देशान्तरगमनं सर्वथा दूष्यते संघसाहित्ये। मरुस्थलीविभागे। शार्दूलविक्रीडितं वृत्तम्।

**158. The girl to the friend :**

He went, dear, to gather wealth
To put into actual practice
The precepts he held that those that spend
The wealth they have are not
To be accounted wealthy people,
That the lives of those that have not
Are worse than those of suppliants.
So leaving me he went,
But what a route he has to traverse!
Killer thieves resembling
The god of death keep a watchful eye
For the hapless wayfarer
While the eagle looks with eager eyes
On the lofty mound of corpses
Of travellers killed in earlier sorties
In the waterless, barren wastes!
(Kuruntokai 283)

159. ध्यायामि कण्टकनिभैर्दशनै र्निशातै-
रक्तं द्युतावमृतसंस्रवदाननं च।
केशं सुरभ्यगुरुचन्दनधूमगन्धिं
स्रोतोवहास्वसितसैकतकान्तियुक्तम् ॥

दीर्घाक्षिणी गिरिजनस्य हिमे सुतायाः
मन्दं स्मितं च मदगर्वितमीक्षणं च।
साक्षाद्विलोकयितुमेवमशक्नुवानः
चित्ते किलेदमखिलं परिकल्पयामि ॥286॥

नायकः सखायं वक्ति। "सर्वावयवसुन्दरीं तां साक्षाद्विलोकयितुमशक्नुवान एवं प्रकारेति चित्ते परिकल्पयामि" इति। द्युतौ प्रकाशे, रङ्गे तर्किते सति, तदाननं रक्तं, स्रवदमृतं च। व्रीडायाः हेतोस्तां साक्षात्पुरतो द्रष्टुमशक्तः नायक एवं मनसि तां चित्रीकरोति। पर्वतविभागे। वसन्ततिलका वृत्तम्।

**159. The boy to his friend :**

Her teeth resemble thorns
Her ruddy mouth secretes
A fluid, nectar-like!
Her coiffeure resembling
Dusky sands gives off –
A fragrance like the smoke
Of akil and of sandal.
Her eyes are big and cool.
I have to envisage
The smile and haughty look
Of the daughter of the hillfolk
Before my mental eye.
As to seeing her face to face,
I ar'nt lucky, I can't do it.

(Very clearly he has met her, perhaps more than once but with the timidity of lovers at the incipient stage, he expresses his doubt that he would ever be able to gaze at her as she must be gazed at)

(Kuruntokai 286)

160. कामं वशे नय बलादिति ये वदन्ति
नैतद्विदः स्युरथवा सुविनिश्चितार्थाः ।
तद्विप्रयोगदलिता त्वहमर्णवोर्मि-
फेनः शिलाहत इवैमि शनैरसत्ताम् ॥290॥

नायिका सखीं वक्ति। "दुःखं संयच्छ रोदनेनालमि"ति वारं वारं मां वदसि। इतरेप्येवमेव मामुपदिशन्ति, "कामं वशे नये"ति। य एवं वदन्ति ते कामस्य तत्त्वं न विदन्ति, अथवा ते सुविनिश्चितमतयः स्युः। मया न साध्यमेतत्। कामस्य वेगोऽसह्यः। धवस्य विप्रयोगेन नितरां कर्शिताहं शनैः शनैर्मृता स्याम्। पश्य, सागर-तरङ्गशिखरे यः फेनः स तीरे शिलया हतः शनैः शनैः कार्श्यमुपगम्यान्ते पूर्णतः नष्टो भवति, एवमेवाहं मरिष्यामि शनैः शनैरि"ति। समुद्रतीरविभागे। वसन्ततिलका वृत्तम्।

**160. The girl to the friend :**

Many are those that counsel me
To bear in patience all the heart-ache
Engendered by my love for him.
Do these wise men know the torment
Of a lovelorn bosom or are they those
Of rock-like grit that can overwhelm
The misery wrought by the loved one
Staying away? I, then, am not
One of them. For when he keeps away
Like this, for months and we do not meet
My heart is filled with the deepest grief
My body, day by painful day
Slowly wastes away; my life
Like the froth on the crest of the wave that beats
On the rock in the beach shall wear away
Into airy nothingness.

(Kuruntokai 290)

161. ममाक्षिद्वारायं प्रणयहुतभोक्ता द्रवयति
ममास्थि प्रेयान्मे न तु खलु परिष्वङ्गसुलभः।
न चाप्येनं द्रष्टुं परिचितनिकुञ्जे ह्यवसरः
न वोत्कण्ठामेनां मम शमयितुं पारयति सः ॥

निसर्गात्संभूते मलनिकरजे कुक्कुटरणे
न काचिद्द्रष्टव्या समरपरिपाटी न नियमः।
न चास्ते मध्यस्थो घटक इति न द्रष्टृनिवहः
अदृष्टान्यैः स्यान्मे मृतिरिह यथैकाकिनि रणे ॥305॥

नायिकात्मगतम्। "ममनयनद्वारान्तः प्रविश्य प्रणयो नाम हुतभोक्ता वह्निः ममास्थि द्रवयति। वल्लभस्तु परिष्वङ्गसुलभः। न चाप्यवसरोलभ्य एनं परिचितनिकुञ्जे द्रष्टुं, मम गृहे निरुद्धत्वात्। स वल्लभः ममैनामुत्कण्ठां शमयितुं न पारयति च। एवंभूते व्यतिकरे मम मरणं समीपस्थमेव। जातस्य हि ध्रुवो मृत्युः। परं तु मम मृतिरन्यैरविज्ञाता भविष्यति, तस्याः किमपि मुख्यत्वं न स्यादेव। कुक्कुटयुद्धमिति महता धनव्ययेन जनानामानन्दाय प्रदर्शितमस्ति तत्र तत्र। तस्मिन् काचित् समरपरिपाटी द्रष्टव्या सर्वैः। मध्यस्थः कोप्यधिकृतोस्ति यः जेतारं कुक्कुटयोरन्यतमं शंसति। परं तु ग्रामवीथ्यां मलनिकरे संभूत आकस्मिके कुक्कुटरणे नैते दृश्यन्ते। अदृष्टावन्यैरेतौ द्वावपि म्रियेते। तद्वदहमपि पञ्चत्वं गमिष्यामी"ति। पर्वतविभागे। शिखरिणीवृत्तम्।

**161. The girl to herself :**

The spark of love that flew into me
Through the orifice of my eager eyes
Has burnt my insides; I cannot have
The fire quenched with his cooling glance,
With the embrace that can vitalise :
I cannot call on him nor he
Can meet me here at a rendezvous.
My inner fires rage : I pine
And waste away. I sure shall die
Not with a fourish but an obscure death
Not like the prized fighting cock

Whose every move the eager throng
Lauds in frenzied admiration,
Which, between bouts is kept away
And nursed with tender solicitude,
Lives a royal, pampered life
And dies like a king, in the battlepit,
The cynosure of the spectators.
But I shall pine my life away
With none to salve my bruised heart
And die obscure and no one wiser,
Even like the cocks that fight to death
On the lowly dust-heap in the village street
The mangy cocks of the meanest bearing
Obscure waifs of no account,
Whom none notices, no one misses.

(Kuruntokai 305)

162. यत्राम्भोधितटे समृद्धविटपस्याम्रस्य धातुप्लुते
गुच्छे भृङ्गगणः पतत्यविरलं तस्येश्वरे नागते।
वक्ष्याम्यस्य पुरः पदानि मृदुलस्वादूनि नैवेति ते
चित्त प्रोक्तमिदं तव स्मृतिपथं नायाति तद्दर्शने ॥306॥

कामिनी आत्मगतं वक्ति। "हे चित्त, यस्य समुद्रतटे समृद्धस्याम्रस्य पुष्पगुच्छेषु धातोर्भक्षणेच्छया अलिगणाः अविरलं पतन्ति, स दयितः निष्ठुरः। तस्मिन्नायाते क्रोधमेवाविष्कुरु मृदुलवचांसि मा वदेति मयां प्रोक्तं दूरीकृत्य तस्य दर्शने स्वादुतमाः एव वाचः वदसि। किंकारणमत्रे"ति सात्मानमेव गर्हते। समुद्रतीरविभागे। शार्दूलविक्रीडितम् वृत्तम्।

**162. The girl to herself :**

O heart of mine!
In the chieftain's land
On the shore of the sea,
Eager swarms of bees
Fall on the mango flower
Heavy with honeyed pollen.
I instructed you
Not to utter soft,
Honeyed words of love
When the chief is about
But you clean forget all,
All my words of warning
Once the chief is sighted!

(Kuruntokai 306)

163. क्षेत्रेभ्यः कृषिकैः स्वकर्मनिरतैश्छिन्नं निरस्तं भुवि
पुष्पं नष्टमवेक्ष्य वीतसुरभि प्रस्थाय नीलोत्पलम्।
अन्यत्स्थानमितो न गच्छति पुनस्तत्रैव संफुल्लति
त्वत्कर्मव्यथितापि नीलसुमवत् त्वय्येव लीना प्रिया ॥309॥

पण्यस्त्रीसंगमादागतं नायकं सखी वक्ति। "तव पुरस्य निकटे क्षेत्रिणः नीलोत्पलपुष्पं क्षेत्रसीमसु वर्धमानं छित्त्वा क्षिपन्ति। परं तु 'इमे क्रूरकर्माणः। एतस्मिन् स्थाने मया न स्थातव्यम्' इति जुगुप्सापरं नीलोत्पललता स्थानान्तरं न गच्छति, परं तु तत्रैव तिष्ठन्ती पुनः पुनः पुष्पाणि जनयत्येव। वयमपि तादृग्गुणा एव। त्वयि अस्माकं बहुविधान्यनिष्टानि कृतवत्यपि त्वया विना न जीवितुं शक्नुयामे"ति। नदीतीरविभागे। शार्दूलविक्रीडितं वृत्तम्।

**163. The friend to the boy :**

Welcome, the foot-loose! Your wedded wife
Whom you have treated with such ill grace
Extends her welcome to you returning
After months of straying, now home to her.
For she cannot live without you, apart,
Whatever the heart-ache you cause in her.
You must have seen the neidal plant
Growing wild in the paddy fields,
Blooms and all, cut off by the farmers
And thrown out on the ridges to fade.
But from the root it gains a foothold
In the self-same field : it does not feel,
'I shall not trespass where I am not wanted!'
It needs the fields, it has no life
Apart from that; your lady-love
Needs you likewise for her sustenance;
However deep you pierce her heart
With the javelin thrusts of your faithlessness
She cannot help loving you still,
You still are the factor, the only reason
For which she lives!
(Kuruntokai 309)

164. कान्ता सुविज्ञातपथद्वयी मे युधि प्रवीरस्य वने यथा स्यात्।
मध्येक्षपं गन्धवती तथैव भवत्यविच्छेद्यतया मदीया ॥

पुष्पाणि केशादपनीय गन्धि तैलं ततोऽनक्ति विधाय केशम्।
न दर्शयन्ती मुखभावभेदं कल्ये विदग्धा निजबन्धुमध्ये ॥312॥

नायक आत्मगगतम्। "मे कान्ता मार्गद्वयमपि जानाति। युधि प्रवीरस्य (मलयन् इति कृताभिधानस्य) राज्ञः वने यथा सुगन्धीनि पुष्पाणि सौरभ्यं प्रसारयन्ति तथैव सुगन्धं दिक्षु प्रसारयन्ती सा मध्ये क्षपं निशायाः मध्ययामे आगत्याविच्छेद्यतया पूर्णतया मदीया भवति। संगमान्ते पुष्पाणि चिकुरादपनीय केशपाशसंस्कारं कृत्वा गृहं निवर्तते। गृहे तु संगममुद्दिश्य न किंचिदप्याविष्कुर्वाणा विदग्धा निजबन्धुषु सस्नेहा दुहिता यथाचरेत्तथाचरति। किमस्याः सामर्थ्यमि"ति। पर्वतविभागे। उपजातिः वृत्तम्।

**164. The young man to himself :**

**How resourceful, how deviously cunning**
**She can be! And what an actress consummate!**
**When, of nights, she comes bedecked with flowers**
**That spread a bouquet through all the Mulloor woods**
**Of the matchless warrior Malayan with the javelin**
**She seems mine own. But comes the dawn and then**
**She takes off the floral wreaths and dresses**
**Her locks with oil and midst her kinsmen keeps**
**The straightest face with never a hint of all**
**That has been going on between us all this while,**
**She acts the daughter of the house surrounded**
**By loving kinsmen, a daughter unmarried!**

**(Kuruntokai 312)**

165. उच्चैर्व्योम्नि पयोगर्भाः गर्जन्तः शीतलाः सखि।
स्फुरद्विद्युत्समायुक्ताः तीव्रं वर्षन्ति वारिदाः ॥
रवावस्तमिते दिक्षु सान्धकारासु वर्षतः।
एकाकित्वशुचाक्रान्ते सायङ्काले तु वल्लभः ॥
यातो मरुस्थलीर्दुःखदायिनीर्धनकाङ्क्षया।
नायातो मे स्तनद्वन्द्वं संमृत्यालिङ्गितुं दृढं ॥314॥

नायिका सखीं वक्ति। सुगमार्थमिमानि पद्यानि। विशिष्य सायङ्काले वियुक्ताः महत्तरां व्यथामनुभवन्तीति कारणात् एकाकित्वस्थितिः तस्मिन् आरोपिता। गोप्रचारविभागे। अनुष्टुप् छन्दः।

**165. The girl to the friend :**

He has left for distant lands
Traversing the desert
Where the wayfarer is tormented
By many an adverse factor,
Here, now, dear, the clouds have risen
Laden with water skyward
And making constant rumbling sounds
And flashing streaks of lightning.
They pour down rain. And darkness fills
The empty barren evening
And he isn't back to fondle and press
My youthful burgeoning breasts!

(Kuruntokai 314)

166. समुत्थितो नीरनिधाविवेन्दुः यस्याचले संस्रवदम्बुपातः।
कान्तः स मे सप्ततुरङ्गमाभः वृन्दासुमाभं मम चांसयुग्मम् ॥315॥

नायिका सखीं वक्ति। "यस्य पर्वते जलपातः समुद्रे उत्थितश्चन्द्र इव भाति स मे कान्तः सप्ततुरङ्गमाभः सूर्यसमानः। मम चांसयुग्मं वृन्दाकुसुमवत् आचरति। वृन्दायाः कुसुमं सूर्यस्य गतिमेवानुसरति। प्रातः पूर्वदिगुन्मुखं सायङ्काले पश्चिमदिगुन्मुखं च भवति। तद्वत् मे भुजयुगलमपि कान्तोन्मुखमेवास्ति। तस्मिन् संनिहिते पुष्टं तस्मिन्प्रोषिते कर्शितं च भवति" इति। "किमर्थं व्यथसे। स शीघ्रमेवायास्यति तव सकाशमि"ति वदन्तीं सखीं नायिका "तदधीनाहम्। तस्मिन्नसन्निहिते मम मनः व्यथते मम वपुश्च क्षयमुपैति। किं वा कुर्यामि"ति प्रतिवदति। पर्वतविभागे। उपजातिः वृत्तम्।

**166. The girl to her friend :**

The chief is like the sun –
The chief of montane slopes
Where silvern cascades flow
Like the path of wondrous light
Made by the moon on the sea
And my shoulders, dear
Are the nerunji bloom to his sun.

(The nerunji flower follows the movement of the sun)

(Kuruntokai 315)

167. यस्याम्भोनिधितीरसैकतचरो विद्रावितः कर्कटः
कन्याभिश्चिरलीलया प्रमथितः संरक्ष्यते वीचिना।
मुख्यो लङ्घितवान् वचः स्वगदितं तस्माद्गलत्कङ्कणां
क्षामां मां यदि तत्कृते व्यसनितां मातावगच्छेन्मृतिः ॥316॥

कन्योक्तिः सखीं प्रति। "सागरतीरे कन्याभिर्लीलया इतस्ततो विद्रावितः कर्कटः वीच्या जलधिं यापितः तस्मात् ताभ्यो रक्षितः। मे रमणः मत्पुरतः कृतां प्रतिज्ञां लङ्घितवान् तस्माद्व्यथिताहं कर्कटवत् यदि रक्ष्यै तेनैव रमणेन, तर्हि जीवामि। परं तु यदि स शीघ्रं नायाति तर्हि माता रहस्यमिदं विजानीयात् ततः परं मे मृतिरेव फलं स्यादि"ति विलपति। समुद्रतीरविभागे। शार्दूलविक्रीडितं वृत्तम्।

**167. The girl to the friend :**

The verbal promise of the chief of the shore
Has gone in vain, has not been fulfilled
The shore of the sea where a crab set upon
Ruthlessly by a bevy of girls
And running hither and thither, weakened,
Is saved by a timely wave from the sea.
The neglect of the chief has set up changes
In my person; my bangles slip
And my whole body is debilitated.
If mother ever notices them,
Notices these changes in me,
She would infer the cause and, dear
I shall then cease to keep alive!

(Kuruntokai 316)

168. वत्सः सादरवन्यधेनुमपि यत् हित्वा भयाद्विह्वलः
श्रुत्वा व्याधकृतं रवं निकटतो ग्रामं गतोऽज्ञानतः।
कन्याभिः परिपालितोऽत्र वसतिं चक्रे प्रियेणादृतः
स्वादुः कः समवायतो धवमिवः पद्भ्यां यथाशक्ति तम् ॥322॥

कन्या वक्ति सखीम्। कामिनश्चिरप्रोषितत्वात् कन्या "तत्पार्श्वं इवः गच्छावः, पद्भ्यां चरन्त्यौ। प्रणयिनोः समवाय एव लोके स्वादुतमः" इति ब्रूते। तन्निदर्शनार्थमेनां कथामपि वक्ति। व्याधकृतं सरभसशब्दं श्रुत्वा नितरां भीतो वत्सः स्वमातरं वन्यधेनुमपि विसृज्य अजानन् निकटस्थं ग्राममगच्छत्। तत्र कन्याभिः सादरं पोषितस्तत्रैव सुखमवसत्। वत्सेन लब्धः कन्याभिः समवायः स्वादुरासीत्। तद्वत् आवामपि प्रेमिणा सह संगतिमाप्नुवः तत्र इवः गच्छावः इति ब्रवीति। विरह एव वर्जनीयः, यत्नादपि लभ्यः समवाय इति भावः। पर्वतविभागे। शार्दूलविक्रीडितं वृत्तम्।

**168. The girl to the friend, with the boy listening in, concealed :**

The comely young calf of a jungle cow
Frightened by the deafening din
Raised by hunters left its flock
And wandered into a mountain hamlet
Where it was petted and cared for by
The young girls there; it liked the place
So well it preferred to live on there
Forgetting its mother and its native flock.
Mixing with people, intercourse
On a social basis is a joyful thing,
We shall now go walking, dear
To where the chief of the hills resides!

(The boy was late for the tryst and the critical friend started tearing him to bits. The loyal girl says this in his defence, realising that he had come in the meantime and concealed himself.)

(Kuruntokai 322)

169. वैतालिकैर्गीतमुदात्तनादम् मरुस्थलीरागनिबद्धमुच्चैः।
यथा नभस्पर्शि तथा स्वनन्तः क्षेत्रेषु वर्षन्त्यसिताम्बुवाहाः ॥

तत्पोषितेषु प्रसवेषु गन्धः यावन्मनः प्रीतिकरोऽस्ति तावत्।
ललाटमस्याः सुरभि प्रियायाः स्कन्धे स्वपन्यानि दिनानि सूत ॥

पुरा प्रवासान्मम यापितानि तान्येव तूर्णं भुवि जीवितानि।
तद्विप्रयुक्तस्य दिनानि यानि धान्यास्थितुल्यानि विनिष्फलानि ॥323॥

चिरप्रवासानन्तरं गृहं निवर्तमानस्य नायकस्य सारथिं प्रत्युक्तिः। "यानि दिनानि तस्याः संगमे यापितानि तान्येव तत्वतः मया जीवितानि। वियोगे यानि यापितानि धान्यास्थितुल्यानि निरर्थकानि तानी"ति। मरुस्थलीराग इति दक्षिणदेशे पूर्वकाले प्रसिद्धो रागः संगीते। एतेनोपमितः मेघानां रवः। गोप्रचारविभागे। उपजातिः वृत्तम्।

**169. The boy to his charioteer :**

The rains have come down
With the sound of music
Of vagrant bards playing
On their famed lutes.
The mullai creepers
Have blossomed now.
The fine scent coming
From these blossoms
Reminds me of
The bouquet of her forehead.
The days I spend
Lying on her shoulders
Are days lived truly.
The rest are useless
They are nothing more
Than grainless chaff!

(Kuruntokai 323)

170. अहमेमि पुरान्तरं प्रिये बहुधेत्येव वदन्न चागमत्।
पुनरेम्यहमित्यनेन मे भणिते गच्छ चिराय पार्श्वतः ॥
इति मद्वचनात्कुतो गतो ह्यवलम्बो मम बाष्पपूरितम्।
उरसोर्विवरं वियोगतः बकमत्स्योषितकुण्डतां गतम् ॥325॥

नायिका सखीं वक्ति। "पुरान्तरं गमिष्यामीति बहुधा मामवदत् वल्लभः। क्रोधादहं गच्छ चिराय मत्पार्श्वत' इति तमवदम्। मद्वचः श्रुत्वा कुत्र गतोऽयं ममावलम्बभूतः प्रणयीति न जाने। तद्वियोगतः ममोरसोर्विवरं बाष्पपूरितं बकमत्स्यैरुषितकुण्डवत् दृश्यते शोकस्य कारणादि"ति। द्वितीयपद्यनिबद्धातिशयोक्तिर्नायिकायाः दुःखाक्रान्तत्वसूचिका। समुद्रतीरविभागे। वियोगिनी वृत्तम्।

**170. The girl to her friend :**

He kept on telling me
He was leaving on his journey
I thought it was all
His usual talk
Never meant to be taken
In seriousness
And I told him, dear
"You leave me for good!"
What a tragic sequel
To my words of petulance!
He left on his journey
We know not where.
He is our support
Our rallying ground;
Where is he now?
The tears from my eyes
Fill the interspace
Between my breasts
Making it a pool
Rather like the one
Where strut the cranes
With dusky legs!
(Kuruntokai 325)

171. बद्धस्रजा प्रबलवंशवदंसभासा कन्याकुलेन सह सैकतगेहबन्धे।
यं व्यापृताकरवमालि धवेन संगं स स्याद्दिनैकविरहे सुचिराय तिक्तः ॥326॥

कन्या सखीं वक्ति। केनचित् यूना संगः कृतोऽनया, सह चेटीभिः क्रीडार्थं सैकते गृहनिर्माणसमये। "स संगः यदि सः एकदिनं नायाति, चिरकालस्य दुःखं मयि उत्पादयति"। एवमू अल्पात् कारणान्महत्फलं प्रभवतीति सविस्मयं सदुःखं वक्ति बाला। समुद्रतीरविभागे। वसन्ततिलका वृत्तम्।

**171. The girl to her friend with the lover listening in, concealed :**

The bond that was born in the little mud houses
Built on the shore by girls that play
Water games sporting wreaths of flowers –
Girls with shoulders plump like bamboos –
Is such, my dear, that if the chieftain fails
To come to the tryst for a single night
The anguish that engulfs me, in truth,
Looks as if it is the sum of griefs
Befallen over a stretch of time!

(Kuruntokai 326)

172. आधुग्नशुण्डः करिणीमिभेन्द्रः परिष्वजञ्श्वासमनोज्ञगन्धाम्।
महीध्रपल्लीषु सभाङ्गणानि शनैः समागच्छति यस्य राज्ये ॥

तस्मै धवायाथ निशान्तयामे क्रूरो यदा वाति तुषारवायुः।
अन्तःशुचायाः शमनार्थवाचः का नाम हानिः समुदीरणेन ॥332॥

सखी नायिकां वक्ति नायके तिरोभूते। "संगमार्थमायाति परं तु विवाहप्रयत्नं न कुरुते तव वल्लभः। संकेतानुसारं तस्मिन्नायाते तवाभिलाषं तस्मै निवेदय। का हानिः स्यादस्मादि"ति। करिणः प्रेम करीणीमुद्दिश्य यत् प्रथमपद्ये वर्णितं तत् वल्लभस्यापि मनःस्थितिं सूचयति। एवं तिर्यग्जातयोऽपि प्रेमबद्धाः नायकस्य भूमौ। स दयितायाः शुचं विज्ञाय विवाहार्थान् प्रयत्नान् ध्रुवं करिष्यतीति सख्याः प्रतीतिः। पर्वतविभागे। प्रथमं पद्यं उपजातिवृत्ते, द्वितीयमिन्द्रवज्रायाम्।

**172. The friend to the girl :**

What is the harm, my dearest,
If you do mouth the words
Nearest to your heart
In the presence of the chief –
The chief of mountain slopes
Where an elephant, embracing
Its handsome mate whose breath
Smells sweet, descends down
To the common meeting ground
In the hamlet on the highlands –
What's the harm in expressing
That which is nearest your heart,
Thus healing the heartache, dearest
That's so difficult to bear
In the endless winter's night
When the cold northern wind
Blows wafting drops of rain?

(Kuruntokai 332)

173\. गत्वा क्षेत्रमुपांशु जग्धबहुलव्रीहिर्यदद्रौ सखि
गोप्त्रा सेषुशरासनेन विदयं विद्रावितः कुञ्जरः।
कन्यावृन्दनिरस्तकीरनिवहैः साकं समुद्वेजितैः
खर्वाश्मानमुपेतुमिच्छति जवात् प्रच्छादनार्थं भिया ॥
एतादृशे शैलपथे त्वयालि संगाभिलाषात् भ्रमतो रजन्याम्।
शोकोपशान्त्यै रहसः प्रकाशं कुर्याव मात्रे यदि को नु दोषः ॥ (युग्मम्) 333॥

सखीवचनं कन्यां प्रति। "क्षेत्रगोप्ता सायुधेन विद्रावितः करी, कन्याभिः समुद्वेजिताश्च पक्षिणः प्रमुख्यस्थितिसूचकाः। प्रतिरात्रि गिरिमार्गे सापाये आगच्छति कन्यायाः संगमार्थी प्रमुख्य इति कारणात् एतद् अस्माकं रहस्यं मातुः पुरतः यदि आवां प्रकाशं कुर्वः तर्हि को वा दोषः स्यात्?" इति सखी वदति। "इतो गत्वा वक्ष्यामि। तत्फलं स्याद्विवाहनिश्चयः" इत्येव तस्या उद्देशः। पर्वतविभागे। युग्मे पूर्वं शार्दूलविक्रीडितम् वृत्तम् इतरत् इन्द्रवज्रा।

**173. The friend to the girl :**

The gentle-eyed tusker
That trespassed into
The fields of millet
Has been chased away
By the well-armed farmer
So were the parrots
Driven away
By the watchful girls;
The tusker takes refuge
In the mountain-caverns
But of fear.
The chief of the mountain
Should not be put
To grievous anguish
I suggest, dear
We reveal our secret
To our mother;
What is the harm
In such a step?

(Kuruntokai 333)

174. वीचीनां जलकुक्कुटस्य निवहस्तुण्डेऽरुणो बिन्दुभिः
क्लिन्नः शीतलतां द्विषन्कुसुमितं कुञ्जं श्रितो यत्तटे।
विस्तीर्णाब्धितटस्य तस्य परमो गच्छेद्विहाय प्रियां
प्रभ्रंशेय किमन्यदालि वद मे प्राणान्महार्हान्विना ॥334॥

नायिका सखीं वक्ति। "वल्लभः यदि मां विहाय धनसंचयार्थं गच्छेत् तर्हि प्राणानहं त्यजेयम्। अन्यत्किं, प्रभ्रंशेय प्राणान् विना? तस्य समुद्रतटे जलकुक्कुटाख्य-पक्षिणः वीचीनां बिन्दुभिः आर्द्रीकृताः तदुत्पन्नशीतलतां द्विषन्तः पुष्पितं तटस्थं कुञ्जं प्रविशन्ति। तस्य देशे तिर्यञ्चोऽपि दुःखनिवारणम् अयत्नाल्लभन्ते। परं तु केन वा कारणेनायं प्रवासगमनात् मां क्लेशयती"ति। समुद्रतीरविभागे। शार्दूलविक्रीडितं वृत्तम्।

**174. The girl to her friend who asks her if she can bear the pangs of separation if the lover leaves for distant climes for some reason :**

If the chief of extensive seashore lands
Where the flock of red-mouthed gulls
Feeling the cold of the water drops
Drenching their backs resort to the bowers
Where a colourful range of flowers bloom,
If the chief does leave what else have we
To lose, my dear, but our own life?

(Kuruntokai 334)

175. हर्षाय प्रतिपक्षिणां गुरुशुचे नश्चापि मेधाविनः
नायान्त्यत्र समुद्रतीरपरम त्वत्स्यन्दनो द्योतयन् ।
गानं शोकघनं स्वकिंकिणिरवै र्यानि च्छिनत्यध्वनि
तानीव व्यथिता सुमानि दयिता सर्वानुकम्प्या ध्रुवम् ॥336॥

निशासंकेतं याचमानं नायकं निरोधयन्ती वक्ति। "मेधाविनः प्रतिपक्षिणां शत्रूणां हर्षायानुरागवतीनामस्मादृशां शोकायात्र रात्रिकाले नायान्ति। त्वत्स्यन्दनेन किंकिणीरवयुक्तेन यानि नीलोत्पलान्यध्वनि छिन्नानि तानीवेयं दयिता तवागमनेन व्यथिता भवति। सा सर्वानुकम्प्या। तस्माद्रात्रिसंकेतमनुसृत्य त्वया नागन्तव्यमिहे"ति। "स्यन्दनबद्धकिंकिणीकृतः रवः तवागमनं प्रकटीकरोति। तस्माद्ग्रामे किंवदन्ती प्रसरेत्। इत्थं भूते व्यतिकरे प्रज्ञावन्तः रात्राविहागन्तुं न यतन्ते।" इत्येव हेतुरस्या निरोधने। पर्वतविभागे। शार्दूलविक्रीडितं वृत्तम्।

**175. The friend of the girl to the boy :**

Will a wise man come seeking union with the girl
In these circumstances – gladdening the hearts
Of those against us and to torment those like us?
Lord of the shore that runs with honey! When you leave
After a love-tryst with the girl, with all your chariot bells
Sounding merry, she feels sad and lonesome
Crushed like the bluebell blossoms on the shore
Under the ruthless wheels of your moving chariot!

(Kuruntokai 336)

176. दन्तीश्वरं मदजलार्द्रकपोलयुग्मम् व्याघ्रो बली स्फुटमुखो रभसाभिपत्य।
तद्रक्तदन्तयुगलेन विदीर्णदेहः म्लानप्रसूनभरिता विनिपातितेव ॥
शाखा प्रचण्डपवनेन गतासुरास्ते यस्मिंस्तदुच्चगिरिमुख्यपतिर्धवस्ते।
सार्धं त्वया जिगमिषू रहसि प्रियालि यच्चिन्तितं तदनुमोदय वल्लभेन ॥343॥

सखी वल्लभेन सह रहसि गन्तुं नायिकां प्रचोदयन्तीदं वक्ति। "उग्रो बली व्याघ्रोऽपि वल्लभस्य गिरौ वसता गजेन व्यापादितः। तस्मात्त्वं तेन सर्वथा रक्षिष्यसे। तेन सह गत्वोद्वाहेन योजयस्वात्मानं प्रणयिने"ति। मरुस्थलीविभागे। वसन्ततिलका वृत्तम्।

**176. The friend to the girl, encouraging her to elope with her young man :**

In his lofty hills, the powerful tiger
With its mouth wide open
Pounces on the mighty elephant
Aiming at its head
And pierced by the tusks now rendered red
With the gushing blood, it falls
Its body looking very much like
A branch of the vengai tree –
A branch of the tree in the fullest bloom
Severed, fallen down.
Think well, dear and contemplate
Elopement with the chief!

(Kuruntokai 343)

177. नीलोत्पलच्छदनपृष्ठसमानपक्षा यस्मिन्प्रियालि जतुकातिनिशातदन्ती।
अद्रेस्तटेषु पनसाविरलं वनान्तं सायन्तने जिगमिषुः फलभक्षणेप्सुः ॥

अह्नि स्ववासभवनं निभृतं विहाय सोत्कुण्ठमुत्पतति पादपतः सवेगम्।
तस्य प्रदोषसमयस्य विगर्ह्यसत्तां कान्तप्रवासगमनात्परमेव वेद्मि ॥352॥

कामिनी सखीं वक्ति। "सायंकालः मम वल्लभे निकटस्थे सति मधुरोऽभूत्। तस्मिन्विदेशं गते स एव कालः शून्यः दुःखकरः संभूतः। विशिष्य यदा जतुका नाम जन्तुः पनसफलेप्सुः पर्वततटं जिगमिषुः अह्नि यः वृक्षः स्ववासभवनमासीत् तं विहाय शून्यं कृत्वा सोत्कण्ठमुत्पतति, तदाहं सन्ध्याकालस्य निजसत्तां प्रकृतिं दुःखमयीं वेद्मि" इति। धवेऽसन्निहिते कामिन्याः एकाकित्वं प्रवृद्धं भवति सायंकाले इत्यर्थः। मरुस्थलीविभागे। वसन्ततिलका वृत्तम्।

**177. The girl to the friend :**

When, of an evening, the bat with wings
Like the underside of bluebell leaves
Sets out from the tree, its home
All the long day, leaving it lonesome
To fly to the slopes of the hills whereon
Grow jack-trees laden with luscious fruit
Then, my friend, I realise
The true nature, the inward evil
Of evening time, with the lord of my heart
Away so long in distant lands.

(Kuruntokai 352)

178. दिवा जलक्रीडनमम्बुपाते वक्षःप्लवाया अचलेश्वरस्य।
गिरेरुपत्येषु मनोज्ञमालि कार्पासवर्तिद्युतिशोभिगेहे ॥
आलिङ्गयन्त्यां कचसङ्गिपृष्ठम् प्रस्वां निशि प्रेमपरालि गाढम्।
उन्मीलिताक्षिच्छद्दुस्थितेस्ते स्वपस्य तिक्तो व्यपदेश एषः ॥353॥

सखी नायिकां वक्ति तिरोभूते नायके। नायकः रजनीसंकेतं वाञ्छति। रजन्यां मातुः विनिद्रायाः भीतिं वर्णयित्वा रात्रिसंकेतं वर्जयति। दिवासंकेतात् किंवदन्ती जायते इति तमपि वर्जयित्वा विवाहाय चोदयति नायकं पद्येऽस्मिन्। वक्षः एव प्लवः यस्याः। वास्तवतः नायिका सखी च रात्रौ विनिद्रे एव। परं तु मातुरालिङ्गादात्मानं मोचयितुं यो यत्नः तेनैव माता विनीतनिद्रा स्यात्। तस्मात् रात्रिसंकेतनिषेधः। पर्वतविभागे। उपजातिः वृत्तम्।

**178. The friend to the girl, with the boy listening, concealed :**

During the day, on the mountain slope
It is sweet to bathe, with the chieftain's chest
As the boat, in the humming waterfalls!
It isn't sweet, it is a bitter thing,
To lie awake while pretending
To be fast asleep, with mother embracing
My back on which my coiffeure rests
At dead of night in the spacious house
Lit by a lamp with cotton wicks –
That isn't sweet, that's a bitter thing!

(Kuruntokai 353)

179. चिरं जलक्रीडनतोऽक्षिरक्ततां भजेत नित्याश्रितमम्लतां मधु।
शुचोऽपनेता सदयः पुराभवः नयाधुना नौ त्वरितं पितुर्गृहम् ॥

वियोगचित्त त्वमितः पुरान्तरे जलाशयो यत्र हिमाम्बुशोभितः।
पुरावयोरुच्छ्रितशोकरक्षितः नयोरगैः संचरिते पथि स्थितम् ॥354॥

सखी नायकं वक्ति। नायकः पण्यस्त्रीसंयोगादागतः गृहं प्रवेष्टुमनुमतिं याचते। तस्य निष्ठुरत्वं स्मृत्वा तस्य प्रार्थनां निराकुर्वती सखी एवं वक्ति। "तव पत्नी त्वयि बद्धप्रिया एव। परं तु ते पूर्वं मिष्टा सा कालेन जुगुप्सार्हा संजाता, यथा चिरजलक्रीडनं यथा च मधुसेवनम्। पूर्वं त्वं तस्याः दुःखापनेता अभवः। परं त्वपेतप्रेमा त्वं संभूतः। तां तस्याः पितुर्गृहं नय। तत्र वीथ्यां सर्पाः संचरन्ति। इतः पूर्वं तस्याः सा वीथी भयंकरासीत्। परंत्वधुना सा तावती भयंकरा न। तव गृहे वासात् पितुर्गृहवासः श्रेयानिति तस्याः द्योतते।" इति नदीतीरविभागे। वंशस्थं वृत्तम्।

**179. The friend of the girl to the boy :**

If one stays for too long a time in cool waters
In the bathing ghat, the eyes get red. If one tastes
The sweetest honey over a length of time, it turns sour
In the tongue of the taster. The greatest love, in the course of time
Does turn bitter, For months together you have kept away
Forsaking the wedded wife for the gilded charms
Of public women. If you harbour still in your mind
This passion for the harlots - in the name of one you have wronged
I beseech you to take her now, this instant straight to the home
Of her parents – the well–remembered structure in the street
Infested through with venomous serpents, which once she willingly
Gave up to savour the lasting joys of the married state,
For the sake of a future that did seem so full of rosy bliss
And now is not.

(Kuruntokai 354)

180. निरन्तरावृष्टिनिगूढतायाः न व्योम दृश्यं नयनैर्निरुद्धैः।
जलप्रवाहात्प्रचुरात्समग्रं व्यक्तिर्न लभ्या हि वसुन्धरायाः ॥

अस्तं गतेऽर्के प्रसृतेऽन्धकारे लोके प्रसुप्ते कथमत्र यातः।
प्रफुल्लशार्दूलसुमं कथं नः ग्रामं परिच्छिद्य समागतोऽसि ॥355॥

अस्मिन्महति वर्षे नायास्यतीति चिन्तयमाना सखी धवमागतं दृष्ट्वा सविस्मयं वक्ति। "अस्मिन्निरन्तरासारे न व्योम न चापि भूमिर्लक्ष्यते। कथं वा मार्गं विज्ञायायातस्त्वम्? कथं वा प्रफुल्लशार्दूलवृक्षसुमं नो ग्रामं परिच्छिद्य समागतोऽसि?" इति। कामस्य वेगादेवायात इति भावः। शार्दूलनामधेयस्तरुर्यदा प्रफुल्लो भवति तदैव विवाहकाल इति द्राविडदेशे जनानां प्रतीतिः। पर्वतविभागे। उपजातिः वृत्तम्।

**180. The friend to the boy :**

Mountain chieftain!
Rain clouds pile up
To deepen the gloom.
It rains in torrents
And all the earth
Is overflowing
With gushing streams
Of rain water,
In the foggy night
When all the world
Is deep in sleep
(Only we are awake)!
How did you come,
O mountain chieftain!
How did you find
Your way to this
The trysting place
Where we await you,
Where the air is thick
With the heady scent
Of the vengai blossom?
How did you come
In this night of nights,
O mountain chieftain?

(Kuruntokai 355)

181. चन्द्रेणोज्ज्वलिताङ्गणे निजगृहे पुष्पास्तरे पेलवे
मंचे ह्रस्वपदे करीव शयितो दीर्घं श्वसञ्जित्वरः ।
प्रेम्णालिङ्गति पुत्रमात्मदयितं पृष्ठे प्रियालिङ्गति
बन्दिन् पश्य महोत्सवं नयनयोः पश्यानुरागोच्छ्रयम् ॥359॥

सखी बन्दिनं वक्ति। नायकः पण्यस्त्रीसंगमे व्यावृतः स्वभार्यां पुत्रं च विस्मृत्य चिरकालं तासां गृहेषु न्यवसत्। एकस्मिन्दिने भार्यां च पुत्रं च दिदृक्षुरायाति स्वगृहम्। चिरं दुःखितायाः नायक्याः अनुनयार्थं विशिष्य न किंचिदकरोत्, परं तु गृहं प्रविश्य मंचे स्वपुत्रस्य समीपे शयितः तं परिष्वजति वाञ्छया। एवं कुर्वन्तं भर्तारं नायिका प्रेमातिशयेन पृष्ठे परिष्वजति। "अनुरागस्योच्छ्रयमिमं नेत्रोत्सवभूतं पश्ये"ति नायकस्य मित्रं वैतालिकं वक्ति हर्षभूयिष्ठा सखी। नदीतीरविभागे। शार्दूलविक्रीडितं वृत्तम्।

**181. The friend to the girl to the friend of the young man :**

Look at this scene, it's worth looking at!
In the early moonlight, in the evening,
The chief came in, saw his son
Prone in the bed and himself lying
Next to him and sighing like a tusker
Embraced him with burgeoning passion
And his wife coming up embraced his back!
It's beautiful scene, o friend of the chief!

(The husband who had strayed was refused admittance by his wife; but he walked in straight and embraced his little child with great love. The wife, leaving off her dudgeon embraces his back).

(Kuruntokai 359)

182\. तस्याद्रेः स्रवता सुगन्धिकुसुमावर्षाभिपुष्टेन या
नीता प्रातरिहौषधिः करगता तत्पत्रमालिङ्गितम्।
विन्यस्तां भुवि वर्धितां सखि मया दृष्ट्वापि नो निन्दति
माता नोऽर्हति परितोषिकतया स्थानं परं स्वर्गतः ॥361॥

नायिका सखीं वक्ति। "वल्लभस्याद्रेः वर्षानन्तरं सुगन्धिकुसुमैः साकं स्रवता स्रोतसानीता या ओषधिस्तां भुवि विन्यस्य तत्पत्राणि बहुधालिङ्ग्य तद्वर्धनार्थं जल-सेचनादि कर्म कृतवतीं मां माता नानिन्दत्। तस्याः गुणोत्कर्षस्य पारितोषिकतया स्वर्गात्परमपि स्थानं सार्हति" इति। वल्लभेऽदूरस्थे तत्संबन्धि किंचिदपि वस्तु लब्धं चेत्तेन चित्तं विनोदयति कामिनी। वल्लभस्य पर्वतात्स्रोतसानीता ओषधिः तं स्मारयति कामिनीम्। पर्वतविभागे। शार्दूलविक्रीडितं वृत्तम्।

**182\. The girl to the friend who had complimented her on her having borne the interval of separation well :**

Long life to you, dear!
Mother indeed deserves
Greater worlds, even
Than the lofty heavens!
For, listen! The other day
It had been raining well
On our chief's mountain
And the river rising there
Brought a gift in the morning
Along with the freshes –
A complete kanthal plant
Intact with the bulb!
I fished it out of the water
Embraced its tender shoots
And planted it in the garden,
And mother never once
Raised a voice against
All these going-on!
She, sure, deserves the best!

(Kuruntokai 361)

183. दैवीं वाचमुदस्य मातरसिते शैलह्रदे संस्फुटं
दृष्ट्वापावृतपत्रमत्र कुसुमं नीलं परं दुःखिता।
आली चाश्रुमुखी दृढा भवदिति स्वे निश्चये को भ्रमः
संकल्पान्नियतेरभूद्गणनया कामो न तद्विश्रुतेः ॥366॥

सखी धात्रीं वक्ति। "तस्याः दुःस्थितिं दृष्टवा देवकोपादेवेयं इति यदुक्तमुपासक्त्या तदुदस्य सा शैलह्रदे स्फुटं नीलोत्पलं दृष्ट्वाश्रुमुखी अभवत्। स्वनिश्चये सा दृढा-भवदिति को भ्रमः। कामस्तु वल्लभस्य विश्रुतेः गणनया गुणगणानां तोलनेन नोद्भवति परं तु नियतेः संकल्पत" इति। नीलोत्पलं गुच्छं तस्यै दत्त्वैव वल्लभः कामबन्धं अद्रढयत्। तस्मात्तत्कुसुमं ह्रदे विकसितं दृष्ट्वा सा व्यथिताभवत्। चतुर्थपादे कामस्य मुख्यतमं तत्त्वं निदर्शितम्। कामो निसर्गत उद्भवति न गुणानां वा धनस्थितेर्वा गणनादिति सर्वैर्ज्ञायते परं तु साहित्य ईदृशं तत्त्वाविष्करणं न दृश्यमन्यत्र। पर्वतविभागे। शार्दूलविक्रीडितं वृत्तम्।

**183. The friend to the foster-mother :**

This girl, well decked with ornaments
Didn't feel assured and at peace
At the words of the female sooth-sayer.
She gazed long at the blue-bell blooming
In the dark waters of the mountain pond
And feeling the deepest anguish within,
She shed copious tears. Mother,
Her resolve is not to be faulted, either
The deity of love has willed it so!
Who are we to measure, appraise
The qualities that reside in him?

(Through this, the friend manages to tell the fostermother that the girl loves a certain boy and her illness was solely due to her despondency arising from that)

(Kuruntokai 366)

184. दुर्वृत्तो यदि न प्रसीदति ततो यस्मिन् गिरौ प्रेमिणः
कन्याभिर्मुदिताभिरात्तरभसं स्नानाय संभावितः।
पातो वृष्टिजलस्य नीलमणिवत्प्रक्षालिताश्मा चकास्त्-
येनं पश्य नगं यथा वलयि ते स्कन्धद्वयं प्रस्फुरेत् ॥367॥

सखी कन्यां वक्ति। कामी विवाहयत्ने न त्वरते तस्मात्कन्या दुःखभूयिष्ठा। संकेतानां निषेधात् स नागच्छति रहसि। "कामी एवं प्रकारेण दुर्वृत्तः संजातः स त्वां नानुगृह्णाति यदि, तस्य गिरिदर्शनात् त्वं पूर्वसौन्दर्यं पुनर्लभस्वे"ति तामाह्वयति सखी। गिरौ जलपाते कन्यकाः स्नानं कुर्वते समोदं सोत्साहं च। तद्दर्शनादेव तस्याः नष्टोत्साहः पुनरागच्छेत्। जलपातेन गिरेः अश्मानः प्रक्षालिताः नीलमणिवत् दृश्यन्ते। एतदपि तामुत्साहयेदिति मन्यते सखी। विशिष्य प्रेमिणः गिरिरित्येव कारणाद् तत्संबन्धिनः तस्य दर्शनं तां संतोषयतीत्येव सखी मनुते। पर्वतविभागे। शार्दूलविक्रीडितं वृत्तम्।

**184. The friend to the girl :**

If the chieftain with the hardened heart
Does not bless you with his company,
Come out, dear, and have a look
At this mountain, that your shoulders
Decked with handsome clasps regain
Their wonted splendour - the chief's mountain
Where, with the copious rains, the boulders
Washed by the falls where noisy girls
Get a welcome bath, gleam like gems;
Come out of the house to gaze at the mountain!

(Kuruntokai 367)

185. प्रस्थानार्हा लब्धकान्तादरासि साकं गच्छ प्रेमिणालि प्रसन्ना।
यत्रोत्तप्ते चण्डवायौ गुलीनामन्तर्बीजं निस्वनेन्नूपुराभम् ॥369॥

सखी नायिकां वक्ति। विवाहार्थां अनुमतिमलभमानौ कामिनौ सख्याः साहाय्येन रहसि रात्रौ गृहात् पुरान्तरगमने कृतबुद्धी भवतः। तदर्थं सर्वं सज्जीकृत्य वल्लभस्य संमतिमपि लब्ध्वा सखी समोदमेवं वदति। "त्वं लब्धकान्तादरा प्रस्थानार्हा भवसि। प्रसन्ना तुष्टा सती प्रेमिणा सह गच्छ। युवयोर्मार्गे मरुस्थल्यां उत्तप्ते चण्डवायौ सति शुष्कगुलीनामन्तर्भागे बीजं नूपुरवत्स्वनति" इति। नूपुरवत्स्वनः विवाहसूचकः। संघकाले दक्षिणदेशे नूपुरसंबन्धि किंचित्कर्म विवाहे कर्तव्यमासीत्। गृहे विवाहकर्मणा विनानुरागचोदितौ इमौ पुरान्तरगमने व्यग्रौ। एतयोः नूपुरसूचकः शब्दः मनस्तृप्तिं ददतीति सख्याः प्रतीतिः। मरुस्थलीविभागे। शालिनी वृत्तम्।

**185. The friend of the girl to her, urging her to elope :**

Our chief has been
Good to us.
Let us now, dear,
Traverse the wastes
Where the summer wind
Shakes the dried-up
Hardened kernel
Of the vahai tree
To make the seeds
Sound even like
The gems inside
A leg-ornament.

(Kuruntokai 369)

186. पुरे यस्य सख्यो ह्रदे कुड्मलान्तः प्रविश्य स्फुटं षट्पदस्तत्करोति।
यदाहं समं तेन युक्ता प्रियेण तदा देहयुग्मेन युक्तौ भवेव।
यदि प्रेमिणा चैकशय्यागताहं धनुर्धारणे पञ्चयुक्ताङ्गुलीवत्।
तथावां हि गाढानुरागेण बद्धौ गृहं चेद्गतोऽहं बिभर्म्येकदेहम् ॥370॥

बलात्कारेण स्ववशं धवं कृतवतीति नायिकाया वचः श्रुत्वा वाराङ्गना नायिकायाः सखीः वक्ति। "हे सख्यः, तस्य पुरे ह्रदे षट्पदः कुड्मलं प्रविश्य बलात्तत् विकचीकरोति। तेन वल्लभेन समं यदाहं भवामि तदा देहयुग्मेनावां भवेव। यदा तेन सहैकशय्यागताहं तदा धनुर्धारणसमये पञ्चाङ्गुल्यः संयोजिता भवन्ति यथा तथैव गाढानुरागेण बद्धौ स्वः आवां नितरां युक्तौ भवेव। स्वगृहं गते तस्मिन्नेकदेहं बिभर्मि" इति। तत्त्वतः प्रेमबन्धहेतोरेव सा वाराङ्गना तं वाञ्छति, न धनप्रत्याशया। यथा धवः वाञ्छति तथैवानुसरति पण्यस्त्री, बलात्तं न बध्नाति स्ववशमित्येव दृढं वक्ति नायिकायाः सखीनां पुरः। नदीतीरविभागे। भुजङ्गप्रयातं वृत्तम्।

**186. The prostitute to the friend of the girl, on hearing that the latter had spoken critically of her :**

In the well-watered lands of his native city
Bees prise open by force
The fat little bud of the ambal in the pond.
While he's with me,
We are like two bodies with a single soul.
When, together, we go to bed
We are closely bound like the fingers of the hand
That speeds the arrow from the bow.
And when he goes back to his own home
I relapse to the state of a loner!

(The prostitute protests, claiming she does not force herself on the young man but meekly accepts his every decision. But her own analogy in the first three lines gives her away)

(Kuruntokai 370)

187. मम करवलयानां स्रंसनं पाण्डुता च
सखि युगमनयोर्यं पश्यसि त्वं त्विदानीम्।
गिरिपतिरपराद्धो नैव तस्मिन् विपाके
पृथुरयमनुरागः संयमान्मे ह्यतीतः ॥371॥

नायिका सखीं वक्ति। "मम करवलयानां स्रंसनं पाण्डुता चेति युगं यं त्वं पश्यसि मयीदानीं, तस्मिन् विपाके मे वल्लभोऽचलपतिर्नैवापराद्धः। स न दोषवान्। अहमपि विप्रयोगे एवमेव भवितव्यमिति न संकल्पात्कार्श्यं पाण्डुत्वं च भजे। परं ममानुरागः महान्, मम संयमशक्तेरतीत"इति। पतिव्रता पत्युरुपरि दोषारोपणं नैव वाञ्छति। अनिच्छन्त्या अपि एते वपुर्विकाराः कामबलात् संभवन्ति। पर्वतविभागे। मालिनी वृत्तम्।

**187. The girl speaks :**

My bangles will not stay on my hands
They tend to slip from my thinning wrists
And over me a pallor spreads
But I havn't got to be like this
Consciously from the love I bear
To the chief of the hills who harvests crops
Of mountain rice nourished by streams
That cascade down the slope of the hill
Where rainclouds settle : I haven't willed
To be like this : it is love's doing,
Love overwhelms : It's beyond my reining!

(Kuruntokai 371)

188. आगच्छेद्यदि वल्लभो न रजनीसंकेतमाश्रित्य तत्
साधु स्यात् गिरिभेरिका निशि सखि क्षेत्रेषु संवाद्यते।
प्रायो ग्रावणि धान्यसंग्रहपरैः सेयं यथा नाद्यते
तस्माज्जाग्रति सस्यपालकगणे युक्तो न तस्यागमः ॥375॥

सखी कन्यां वक्ति। कामिनि प्रच्छन्ने सति कामिन आगममजानतीव सखी एवं वक्ति विवाहयत्नकरणाय तं चोदयितुम्। "गिरिभेरिका प्रायशः धान्यसंग्रहकाले रात्रौ संवाद्यते। परं तु अद्य यथा संस्यगोप्तारः न निद्रावशं गच्छेयुः तथा भेरी वाद्यते। तृस्माज्जाग्रतां गोप्तॄणां दृष्टिपथे वल्लभः पतेदिति भीत्या" यदि स अद्य नागच्छति तदेवेष्टं स्यादि"ति ब्रूते सखी। पर्वतविभागे। शार्दूलविक्रीडितं वृत्तं।

**188. The friend of the girl to her, with the lover listening in, concealed :**

Listen, my dear, if he does not come
Today to the tryst, that would be good!
For even now, in the middle of the night
The small drum of the farmers harvesting
The millet ears in the fields extensive
Is beaten to keep the watchmen awake.
It would be safer if he does not come!

(Night trysts are forbidden this way and trysts in the daytime in the millet fields are no longer possible as the millet, under harvesting does not need guarding anymore. This is a clear message to the lover listening in concealed, to hurry up the wedding).

(Kuruntokai 375)

189. सुदुर्गमे कैश्चिदवेद्यकूटे देवैकभोग्ये मलयाद्रिपार्श्वे।
स्वैरंरुहच्चन्दनशीतलेयम् वरानना मानस मे निदाघे ॥

संक्षिप्य सूर्येऽन्तरिते स्वरश्मीन् चलत्तदुष्णः परिरक्षितोऽन्तः।
रम्यः सरोजस्य यथान्तरस्थस्तथा कवोष्णा शिशिरे प्रिया मे ॥376॥

वल्लभो वक्ति, आत्मगतम्। दयिता निदाघे चन्दनवत् शीतला, शिशिरे तु सरोजपुष्पस्यान्तर्भागवत् कवोष्णा। तस्याः रम्यत्वं सानुरागत्वं चोद्दिश्य स एवं वर्णयति शरीरसुखकरत्वभावेन। पर्वतविभागे। उपजातिः वृत्तम्।

**189. The young man to himself :**

During summer she is pleasantly cool
Even like the sandal obtained from
The slopes of the Podiyil where gods reside –
The slopes of which living things
Have little knowledge; she again can be
Nicely warm when the water's cold
Even like the insides of a lotus flower
At the setting of the sun whose warmth has been
Kept preserved by the flower in bloom.

(He successfully fights down his urge to leave his girl for distant lands to earn wealth, by reminding himself of her unique attractions).

(Kuruntokai 376)

190. चारुः स्त्रैणात्प्रतनुरबला प्रस्थिता नो वियुज्य
यूना सार्धं धृतशितमहाशूलशस्त्रेण यस्मिन्।
भूयादध्वा खरमरुतले शान्ततिग्मांशुरश्मिः
वर्षैर्वृक्षैः सुखशिशिरितः सैकताक्रान्तभूमिः ॥378॥

धात्रीवचनम्। "मम पुत्री प्रतनुरबला च। नः वियुज्य सर्वाः सर्वांश्च त्यक्त्वा केनचित् यूना सार्धम्, ऊढा गान्धर्वेण विधिना यस्मिन् मार्गे गता स मरुस्थलाध्वा शान्तसूर्यरश्मिः वर्षैः वृक्षैश्च सुखं शिशिरितः भूयात् यथा तयोरध्वखेदो न स्यादि"ति प्रार्थयते। मरुस्थलीविभागे। मन्दाक्रान्ता वृत्तम्।

**190. The foster-mother, on learning of the elopement of the girl with her young man, prays to God :**

May the desert walks
Through which she will pass
In the company of the youth
Prove mild and passable!
May they never feel
The fiery, burning sun!
May the paths be pleasant
With a soft layer of sand!
May the air and the ground
Get cooled down by showers!

(Kuruntokai 378)

191. सद्ग्रामे जलधेर्निरोधपटवः पर्यायतो वीचयः
संमृद्य प्रसवानि कुञ्जनिवहे त्रुट्यन्ति फेनायिताः।
कह्वैर्निस्स्वनितं च तेन हसनात् सार्धं रताया हि मे
ध्वस्तश्रीरबलांसकाहमधुनोन्निद्रा शुचोत्कण्ठिता ॥381॥

कामिनी सखीं वक्ति। "यस्य कामिनः ग्रामे समुद्रतरङ्गा कुञ्जपुष्पाणि संमृद्य प्रतिनिवर्तने फेनायिता, त्रुटयन्ति, बकाश्च महान्तंस्वनं कुर्वन्ति तेन कामिना साकं रताहं बहुधा व्यहसम्। तस्य हसनस्य फलमिदं यदहं ध्वस्तश्रीः विवर्णा अबलस्कन्धा उन्निद्रा शुचा उत्कण्ठिता च संभूता।" हसनस्य फलं दुःखमभूदिति विलपति। कामिनः ग्रामे तरङ्गणां यत्क्रूरकर्म पुष्पसंमर्दनरूपं बकानां संत्रासकरणं च तत् कामिनः क्रूरकर्मैव सूचयति। स प्रेमी काले नागत्य मां परिणयतीति क्रौर्यारोहणं। समुद्रतीरविभागे। शार्दूलविक्रीडितं वृत्तम्।

**191. The girl, deeply affected by her suffering speaks critically of the boy :**

The price of playful laughter
Showing the shiny teeth
In the company of the chief
Of shorelands where the cranes
White in colour cackle,
Where the blooms in the shady bower
Get crushed by the rushing waves –
The price I am paying now
Is the loss of my bodily splendour,
With the shoulders debilitated,
Sleep in total banished,
Pallor spreading all over
And a heart in the grip of anguish!

(Kuruntokai 381)

192. माषप्रहारमुसलाभवृहद्युगांसे रंगेण चित्रितमनोजशरासनानाम्।
केशावतंसवलयैश्च विलासिनीनां भुक्त्वा चिराय सुरतं गणिकाङ्गनानाम् ॥
अप्येताश्च वियुज्येमां यद्यायासि प्रसादयन्।
साध्व्यो वार्तास्त्वया शप्तास्तासामस्याश्च सन्निधौ ॥384॥

सखी नायकं वक्ति। 'माषप्रहारार्थमुपयुज्यमानदण्डवत् पुष्टांसयुगे मन्मथस्य धनुः लिखित्वा रंगेण बहुप्रकारैरलंकृतानां गणिकाङ्गनानां संयोगं बहुकालं अकरोस्त्वम्। वः न त्यजामि' इत्यपि बहुधा शप्तवान् स्याः। परं तु ताः विहायाद्य गृहमागन्तुमिच्छसि पूर्वं तव भार्यायाः पुरतः न त्वां त्यजेयमिति शप्तवान्। तत् विस्मृत्य पण्यस्त्रीणां पुरतः कृताः शापवचांसि च उल्लंघ्य त्वं चरसि। को वा महिमा तव शापानाम्? अस्माकं न कापि प्रतीतिरस्ति तव वाक्षु' इति। नदीतीरविभागे। प्रथमपद्यस्य वसन्ततिलका वृत्तम्। द्वितीयस्यानुष्टुप्।

**192. The friend of the girl to the young man just returning from a prostitute :**

You have enjoyed
The feminine graces
Of women whose shoulders
Resemble the end
Of the metal pestle
Used in the husking
Of blackgram berries,
Shoulders where
The picture of sugarcane
Is painted in unguent,
Women with long
Tresses and jewels;
You have enjoyed them
And cast them aside.
How very reliable
And worthly of trust
Are your oaths, O chieftain!

(Kuruntokai 384)

193. यदाम्भोधेस्तीरे सितसिकतया पुष्पघनिना
निकुञ्जेन द्योतत्पुरपतिवियोगो न घटितः।
तदाहं बालाभिर्विहितपरिपाटिं मदकृते
व्यजानां सायाह्नं न विततमनोग्लानिकलुषम् ॥386॥

कन्या सखीं वक्ति। "समुद्रतीरे सितसिकतया पुष्पघनिना निकुञ्जेन च मनोरम्ये तस्य प्रमुख्येन वियोगो नासीत् यदा, यदा तेन प्रतिदिनं मत्संयोगार्थमागतं, तदा सायाह्नकालः ममासीद्रम्यः प्रमोदकरः। तस्मिन्काले बालाः मदकृते उत्सवार्थं, या भूषणधरणादिपरिपाटी तां विहितवत्यः आसन्। तत्सर्वं मे प्रमोदप्रदमासीत् आसन्न वल्लभत्वात्।" अधुना तु सायाह्नकालः मे मनोग्लानिमेव विदधाति तस्य असंनिहितत्वादिति भावः। समुद्रतीरविभागे। शिखरिणी वृत्तम्।

**193. The girl to the friend :**

During the days the chief could spend with me
I knew only evening times when girls
Got together the ornaments for the observance
Of the festivities in the sandy shore of the sea
Where there are bowers with scented, blooming flowers.
I never knew these dismal, lonely evenings
Loaded with anguish vaster far than earth!

(Kuruntokai 386)

194. सूर्ये चास्तमिते स्फुटे सिततमे प्रत्यग्रजातीसुमे
सन्ध्यां शीतगुणां तरामि रजनीसीमेति यत्नाद्यदि।
रात्रिर्नाम ततः परं निरवधिर्वारांपतेर्विस्तृता
सन्ध्यासंतरणात् फलं किमधुना यत्नात्समासादितम् ॥387॥

कन्या सखीं वक्ति। "वियुक्तया मया महता प्रयत्नेन सायंकालः तीर्णः। सायंकाले सितजातीकुसमं विकचं ममैकाकित्वं सूचयति दुःखं वर्धयति च। स कालः रजनीसीमेति, रजन्याः आगमे सायंकालस्योपरतिरिति प्रत्ययात् मे दुःखस्यावधिः स्यादिति मया सोढः। परं तु तत्कालस्य अन्ते रजनी समुद्रादपि विस्तृता नितरां दुस्तरा दृश्यते। मे दुःखस्यावधिः कदा भवेदि"ति। गोप्रचारविभागे। शार्दूलविक्रीडितं वृत्तम्।

**194. The girl to the friend :**

He stays away. Alone, I pine
All the limping long day through.
Comes the evening when the torrid sun
Sinks behind the western hill
And the dainty mullai blossoms forth
Stirring up the treasured thoughts,
The sacred moments of savoured bliss
That sear the soul when now remembered.
I drop the things I'd started doing,
Stand petrified with anguish laden.
Such is the evening! But I bite my lips
And pull through, heartened by the faith
That night cannot be far behind,
Kindly night when I shall find
Emollients for my bruised soul.
But comes the night – and lo, my plight!
How far does the gloom of night
Spread before my desp'rate gaze!
The flood waters of murky night
Extend unto the farthest rim
Of far horizan! O, how shall I
Cleave my way with my palsied limbs
To yonder shore of effulgence.
The shore of dawn beyond the gloom
Where hope beckons?
(Kuruntokai 387)

195. स्तोकान्यहानि दयितः परिरम्भणे ते वक्षस्स्रजं मथितवान्सखि किंवदन्ती।
रङ्गे रणन्महदुलूकगणे प्रशस्तपाण्ड्यस्य सैनिकपतावधिकाभिधाने ॥
लक्ष्यीकृते रणकलानिपुणैर्द्विषद्भिः शस्त्रैर्हते सति गजेन समं निशातैः।
कोलाहलस्तुमुलितो विजयप्रहृष्टैर्योऽभूत्ततोऽपि महती प्रसृता पुरेऽस्मिन् ॥393॥

नायके तिरोभूते सखी विवाहार्थयत्ने तं चोदयितुं नायिकां वक्ति। "धवेन परिरब्धा त्वं स्तोकान्येव दिनानि यापितवती। परं ततः संभूता पुरे किंवदन्ती तु महती"ति। किंवदन्त्या रवपरिमाणवर्णनार्थमितरे पद्यस्य पादाः। पाण्ड्यसैन्याधिपतिर' धिकाभिधः यदा द्विषद्भिः युद्धरङ्गे हतः, तदा शत्रवः महत्तुमुलमकुर्वन्। ततोऽपि महतीयं किंवदन्तीति वदति सखी। रणे बहवो मृता भवन्ति, प्रेतभक्षणार्थमागतानामुलूकानां रवबधिरितो युद्धरंग इति वर्ण्यते। पर्वतविभागे। वसन्ततिलका वृत्तम्।

**195. The friend to the girl with the boy listening in, concealed :**

Few were the days when you enjoyed
A tight embrace that crushed the wreaths
You wore on your chest, from the chieftain.
But the scandal that rose is noisier far
Than the hearty hurrays raised by the kongar
(Armed with swords with a brilliant shine)
On their killing Adhikan riding
His pachyderm the Pandyan general
In the service of the Pandya king,
Bedecked with jewels crafted with skill
In the battlefield of Vahai where
Owls had a field day feeding on the corpses!

(Kongar – a warlike tribe)

(Kuruntokai 393)

196. तनूत्तमाङ्गः कलभः करेण्वाः वर्णेऽसितायाः प्रसवः सलीलः।
ग्रामं सुरास्यन्दिनमेत्य तत्र क्रीडन् कृशाङ्गैः सह शैलबालैः ॥
साधुः सुशीलः प्रथमं चरित्वा ततः प्रियङ्गुं ग्रसते प्रवृद्धम्।
तथैव ते तस्य सहासलीला प्रत्यर्थिभूता परिणामकाले ॥394॥

सखी नायिकां वक्ति। "गजशिशुः सुरास्यन्दिनीं पल्लीं प्रविश्य तत्र कृशाङ्गैश्शैलबालकैः साकं समोदमक्रीडत्। कालेन ग्रामवासिनां विश्वासं संपाद्य ततः परं ग्रामक्षेत्रिणां प्रियङ्गुधान्यं भक्षितुमारभत। एवंप्रकारेण वल्लभः प्रथमं सलीलः नर्मवाक् त्वया सह सख्यं कृत्वा अधुना वियोगं कृत्वा तव दुःखप्रदः प्रत्यर्थी संजात" इति। पर्वतविभागे। उपजातिः वृत्तम्।

**196. The friend to the girl :**

An elephant calf, sweet and playful
Enters the mountain hamlet, meets
Eager, playful hillfolk children
Picks up a friendship and runs about
In gay abandon. Having gained
The confidence of the village folk
In course of time it starts plund'ring
The full-grown millet in the village fields!
Likewise the chief started being
Friendly, sweet, all amicable
Only to go on his endless journey
Leaving you to lonely anguish.
His laughter and gaiety, my dear, today
Have turned out to be your bitter foes!

(Kuruntokai 394)

197. न दुग्धपाने न च कन्दुके मनः सुता सदाकामयत प्रिया मम।
विहारमालीभिरतोऽद्य रागिणा कथं प्रयाणं सुकरं तया मतम् ॥
मरुस्थले शुष्कतरुं गजस्तुदन् रदेन दूरादचलस्य सोष्मणः।
उपत्यकायां जलदस्य गर्जनं शृणोति तीव्रं पथि यत्र दुर्गमे ॥396

धात्री कुमारीं स्ववल्लभेन सह रात्रौ पुरान्तरं गतां विज्ञाय विलपति। "तस्याः इतः पूर्वं सखीभिर्विहरण एव मतिरासीत्। सा कथमधुना रागिणा प्रेमिणा सार्धं मरुस्थल्यां गन्तुमुद्युक्ता? तत्र गिरेरुपत्यकायां जलदस्य गर्जनं श्रुत्वा वर्षं नितरां काङ्क्षते गजः मरोः निराहारनिर्जलतायाः कारणात्। अत्र पद्भ्यामटनं सुकरं मतं तया कि"मिति। मरुस्थलीविभागे। वंशस्थं वृत्तम्।

**197. The mother laments on realising that her daughter has eloped with her young man :**

She would go without her drink of milk
She wouldn't care for even the ball.
She used to spend all the daytime
At play with her mates, before.
Does she think it an easy thing
To leave behind her all the playmates,
To traverse with him the desert walks,
Where the elephant growing desperate
After piercing with its tusks
A dried-up tree, now pricks its ears
To hear the distant peal of thunder
At the foot of the hills, barren, scorched –
By the ruthless rays of the midday sun?

(Kuruntokai 396)

198. जनोपभोग्ये सलिले जलाशये प्रसर्पिशैवालवदेव पाण्डुता।
परामृशत्प्रेमिणि दूरगामिनी प्रसर्पति प्राणपतेर्विसर्जने ॥399॥

नायिका सखीं वक्ति। "जलाशये यथा शैवालं तथैव स्त्रीणां पाण्डरता प्रसर्पति। जनैः सलिले बहुधोपयुक्ते, शैवालं दूरतोऽपसर्पति। जनेष्वपगतेषु शैवालं सर्वत्र सलिले प्रसर्पति। तथैव पाण्डुत्वमपि प्रेमिणि परामृशति दूरगामि, तेन कामिन्यां विसर्जितायां सर्वत्र त्वचि प्रसर्पति" इति। नदीतीरविभागे। वंशस्थं वृत्तम्।

**198. The girl to her friend :**

You notice, dear, on my skin
A sickly pallor spreading,
Like the weedy moss that keeps away
When people use the pond,
It retreats at the lover's touch;
And, when he keeps away,
It spreads all over like the moss
When no one uses the pond.

(Kuruntokai 399)

199. दीर्घाध्वानं तरेयं झटिति यदि न तं स्वामिनः स्यन्दनेन
पुष्टांसायाः प्रियायाः प्रबलहृदयरुक् सान्यथा नापनेया।
इत्येवं निश्चितात्मा परिहृतसरणिः सोपलं नव्यमार्गं
दृष्ट्वा प्रायः रथस्य त्वमसि किमधुना केवलस्यास्य गोप्ता ॥400॥

नायकः सारथिं वक्ति। "शीघ्रमेव यातव्यं स्वामिना चिरविप्रयुक्ता भार्याशोकापसरणार्थमिति निश्चित्य परिचितदीर्घसरणिं परिहृत्य सोपलं किंचिदिव दुस्तरं परन्त्वदीर्घमार्गं स्वतः विचित्य झटित्येव त्वं गृहमनयः स्यन्दनम्। तस्मात्त्वं न केवलस्य रथस्य रक्षिता परं तु मम चास्याश्च प्राणानां रक्षिता नन्विति"। गोप्रचारविभागे। स्रग्धरावृत्तम्।

**199. The boy to his charioteer :**

You thought if you followed the route
The regular, usual one that's long
It would add to her mental agony,
It was no way of serving her.
So, dear wielder of the horses' reins,
With intent to help, you cut your way
Through pebbly uplands, hard and coarse
And whacked out a new route to serve the need
Of parted lovers, Did you, my friend
Merely give us transport service?
In truth, you have given us back our lives!

(Kuruntokai 400)



**A. V. Subramanian** (b 27 November 1924)
Indian Railways in 1948 as a Probationary O
Served in many parts of India and reti
Additional General Manager, Southern Ra
in 1982. Delivered lectures on literature, re
and philosophy in many places in India. W
lecture tours to USA, Canada, Mal
Singapore, Italy, France and UK. Has writte
80 books on a variety of subjects. Out of
three present his Sanskrit poems. Over 30 o
are on aesthetics and literary criticism
developed an original theory of aesthetics
on Neurology. Has presented many innov
concepts in aesthetics in his books. Secu
number of prizes and citations; been honou
the Tamil Nadu State Government and by re
literary organizations devoted to the develop
of Sanskrit and Tamil.

